# सामवेदसंहिता

## पूर्वार्चिकः

## आग्नेयं काण्डम्

### अथ प्रथमोऽध्यायः

### अथ प्रथमप्रपाठके प्रथमोऽर्धः

(१)

(१-१०) १-२, ४, ७, ९ भरद्वाजो बार्हस्पत्यः ३ मेधातिथिः काण्वः ५ उशनाः काव्यः ६ सुदीतिपुरुमीढावाङ्गिरसौ तयोर्वान्यतरः ८ वत्सः काण्वः १० वामदेवः

॥ अग्निः ॥ गायत्री ॥

२ ३ १ २ ३ १ २ ३ २ ३ १ २
१ अग्न आ याहि वीतये गृणानो हव्यदातये
१ २र ३ १ २
नि होता सत्सि बर्हिषि १

१ २ ३ २ ३ २ ३ १ २ ३ २
२ त्वमग्ने यज्ञानाँ होता विश्वेषाँ हितः
३ २ ३ १ २ ३ १ २
देवेभिर्मानुषे जने २

३ २ ३ १ २ ३ १ २ ३ १ २
३ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्
३ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम् ३

३ २ ३ १ २ ३ १ २ ३ १ २
४ अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया
१ २ ३ १ २र
समिद्धः शुक्र आहुतः ४

१ २ ३ १ २ ३ २ ३ १ २ ३ २
५ प्रेष्ठं वो अतिथिँस्तुषे मित्रमिव प्रियम्
२ ३ २ ३ १ २र
अग्ने रथं न वेद्यम् ५

१ २ ३ १ २ ३ १ २र ३ १ २
६ त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः

३ २ ३ १ २र
उत द्विषो मर्त्यस्य ६

२ ३ १ २र ३ १ २ ३ १ २ ३ १ २
७ एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः
३ १ २ ३ १ २
एभिर्वर्धास इन्दुभिः ७

१ २ ३ १ २र ३ १ २ ३ १ २
८ आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात्
२ ३ १ २ ३ २
अग्ने त्वां कामये गिरा ८

१ २ ३ १ २ ३ १ २र ३ १ २
९ त्वामग्ने पुष्करादध्यथर्वा निरमन्थत
३ १ २र ३ १ २
मूर्ध्नो विश्वस्य वाघतः ९

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
१० अग्ने विवस्वदा भरास्मभ्यमूतये महे
३ १ २र ३ २
देवो ह्यसि नो दृशे १०

इति प्रथमा दशतिः १ प्रथमः खण्डः १

(२)

(१-१०) १ आयुङ्क्ष्वाहिः २ वामदेवो गौतमः ३, ८-९ प्रयोगो भार्गवः ४ मधुच्छन्दा वैश्वामित्रः ५, ७ शुनःशेप आजीगर्तिः ६ मेधातिथिः काण्वः १० वत्सः काण्वः ॥ अग्निः ॥ गायत्री ॥

१ २ ३ १ २ ३ १ २ ३ १ २
११ नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः
१ २३ १ २
अमैरमित्रमर्दय १

३१ २ ३ १ २ ३ २ ३ १ २
१२ दूतं वो विश्ववेदसँ हव्यवाहममर्त्यम्
१ २ ३ २
यजिष्ठमृञ्जसे गिरा २

१ २ ३ २ ३ २ ३ १ २ ३ २
१३ उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः
३ १ २र
वायोरनीके अस्थिरन् ३

१ २ ३ १ २ ३ १ २ ३ २ ३ २
१४ उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम्
२ ३ १२ ३ १ २
नमो भरन्त एमसि ४

१ २ ३ १ २ ३ १ २ ३ १ २
१५ जराबोध तद्विविड्ढि विशेविशे यज्ञियाय
१ २ ३ १ २ ३ २
स्तोमँ रुद्राय दृशीकम् ५

२ ३ १ २र ३१ २ ३ २ ३ १ २
१६ प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे
३१ २ ३ १ २
मरुद्भिरग्न आ गहि ६

२ ३ २ ३ १२ ३ १ २ ३ १ २र
१७ अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः
३ १ २ ३ १ २
सम्राजन्तमध्वराणाम् ७

३ १ २र ३ १ २र
१८ और्वभृगुवच्छुचिमप्रवानवदा हुवे
३ १ २ ३१ २
अग्निँ समुद्रवाससम् ८

३ १ २ ३ १ २र ३ १ २ ३ १ २
१९ अग्निमिन्धानो मनसा धियँ सचेत मर्त्यः
३ १ २ ३ १ २
अग्निमिन्धे विवस्वभिः ९

२र ३ २ ३ १ २ ३ १ २ ३२
२० आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम्
३ २उ ३ १ २ ३ २
परो यदिध्यते दिवि १०

इति द्वितीया दशतिः २ द्वितीयः खण्डः २

(३)

(१-१४) १ प्रयोगो भार्गवः २, ५ भरद्वाजो बार्हस्पत्यः ३, १० वामदेवो गौतमः ४, ६ वसिष्ठो मैत्रावरुणिः ७ विरूप आङ्गिरसः ८ शुनःशेप आजीगर्तिः ९ गोपवन आत्रेयः ११ प्रस्कण्वः काण्वः १२ मेधातिथिः काण्वः १३ सिन्धुद्वीप आम्बरीषः त्रित आप्त्यो वा १४ उशना काव्यः ॥ अग्निः ॥ गायत्री ॥

३ १ २ ३ १ २ ३ १ २ ३ १ २
२१ अग्निं वो वृधन्तमध्वराणां पुरूतमम्
२ ३ २ ३ १ २
अच्छा नप्त्रे सहस्वते १

३ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ऽ १ २
२२ अग्निस्तिग्मेन शोचिषा यँसद्विश्वं न्य३त्रिणम्
३ १ २ ३ २
अग्निर्नो वँसते रयिम् २

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २र
२३ अग्ने मृड महाँ अस्यय आ देवयुं जनम्
३ १ २ ३ २ ३ १ २
इयेथ बर्हिरासदम् ३

२ ३ १ २ ३ १ २ ३ १ २ ३ २
२४ अग्ने रक्षा णो अँहसः प्रति स्म देव रीषतः
१ २ ३ १ २
तपिष्ठैरजरो दह ४

१ २ ३ १ २र ३ १ २
२५ अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः
२३ १ २ ३ १ २
अरं वहन्त्याशवः ५

१ २ ३ १ २ ३ २
२६ नि त्वा नक्ष्य विश्पते द्युमन्तं धीमहे वयम्
३ १२
सुवीरमग्न आहुत ६

३ २ ३ २ ३ २ ३ १ २र ३ २ ३ २
२७ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्
३ १ २र
अपाँ रेताँसि जिन्वति ७

३ २ ३ २उ ३ १ २ ३ १ २ ३ १ २र
२८ इममू षु त्वमस्माकँ सनिं गायत्रं नव्याँसम्
१ २ ३ २ ३ १ २
अग्ने देवेषु प्र वोचः ८

१ २ ३ १ २ ३१ २र
२९ तं त्वा गोपवनो गिरा जनिष्ठदग्ने अङ्गिरः
१ २ ३ १ २
स पावक श्रुधी हवम् ९

२ ३ १ २ ३ २३ २ ३ १ २
३० परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्
२ ३ १ २ ३ १ २
दधद्रत्नानि दाशुषे १०

२ ३ २ ३ १ २ ३ १ २ ३ १ २
३१ उदु त्यं जातवेदसं देवं वहन्ति केतवः
३ १ २र ३ १ २
दृशे विश्वाय सूर्यम् ११

३ २ ३ १ २र ३ १ २ ३ २
३२ कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे
३ १ २ ३ १ २
देवममीवचातनम् १२

१ २ ३ २३ १ २ ३ १ २ ३ १ २
३३ शं नो देवीरभिष्टये शं नो भवन्तु पीतये
२उ ३ १ २
शं योरभि स्रवन्तु नः १३

१ २ ३ १ २र ३ १ २
३४ कस्य नूनं परीणसि धियो जिन्वसि सत्पते
१ २ ३ १ २ ३ १ २
गोषाता यस्य ते गिरः १४

इति तृतीया दशतिः ३ तृतीयः खण्डः ३

(४)

(१-१०) १, ३, ७ शंयुर्बार्हस्पत्यः २, ५, ८-९ भर्गः प्रागाथः ४ वसिष्ठो मैत्रावरुणिः

९ प्रस्कण्वः काण्वः १० सोभरिः काण्वः ॥ अग्निः ॥ बृहती ॥

३ १ २ ३ १ २ ३ १ २ ३ १ २
३५ यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३१ २र
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शँसिषम् १

३ १ २ ३ १ २ ३ १ऽ२ ३ १ २
३६ पाहि नो अग्न एकया पाह्यू३त द्वितीयया
३ २ ३ २ ३ १ २ ३ १ २३ १ २
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो २

३१ २ ३ १ २ ३ १ २ ३ १ २
३७ बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा
३१ २ ३ १ २ ३१ २
भरद्वाजे समिधानो यविष्ठ्य रेवत्पावक दीदिहि ३

१ २ ३ १ २ ३१ २
३८ त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः
३ २ ३ २ ३१ २ ३ १ २ ३१ २र ३ १ २
यन्तारो ये मघवानो जनानामूर्वं दयन्त गोनाम् ४

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
३९ अग्ने जरितर्विश्पतिस्तपानो देव रक्षसः
१ २ ३१ २ ३ २ ३ १ २ ३ २
अप्रोषिवान्गृहपते महाँ असि दिवस्पायुर्दुरोणयुः ५

२ ३ १ २ ३ १ २ ३१ २र
४० अग्ने विवस्वदुषसश्चित्रँ राधो अमर्त्य
२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ६

१ २ ३ २ ३ २उ ३ १ २
४१ त्वं नश्चित्र ऊत्या वसो राधाँसि चोदय
३ २ ३१ २र ३ १२ ३ २ ३ २ ३ १ २र
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ७

२र ३१ २ ३ १ २ ३ २ ३ २
४२ त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतः कविः
१ २र ३ १ २ ३ १ २
त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ८

१ २ ३१२ ३ १ २ ३ १ २
४३ आ नो अग्ने वयोवृधꣳ रयिं पावक शꣳस्यम्
१ २ ३२ ३ १ २ ३ १ २
रास्वा च न उपमाते पुरुस्पृहꣳ सुनीती सुयशस्तरम् ९

२उ ३ १२३ २३ १ २ ३ १ २र
४४ यो विश्वा दयते वसु होता मन्द्रो जनानाम्
२ ३१ २र ३ १ २ ३ १ २र ३१२
मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये १०

इति चतुर्थी दशतिः ४ चतुर्थः खण्डः ४

(५)

(१-१०) १ वसिष्ठो मैत्रावरुणिः २ भर्गः प्रागाथः ३, ७ सौभरिः काण्वः ४ मनुर्वैवस्वतः ५ सुदीतिपुरूमीळावांगिरसौ ६ प्रस्कण्वः काण्वः ८ मेधातिथि-मेध्यातिथी काण्वौ ९ विश्वामित्रो गाथिनः १० कण्वो घौरः ॥ अग्निः ८ इन्द्रः ॥

बृहती ॥

३ १ २ ३ १ २र ३ १ २र३ १ २
४५ एना वो अग्निं नमसोर्जो नपातमा हुवे
३ १ २र ३ १ २ ३१ २र ३२३१२
प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम् १

२३ १२ ३२३ २ ३ १ २
४६ शेषे वनेषु मातृषु सं त्वा मर्तास इन्धते
१ २ ३ १ २ ३ २३ २उ ३१२
अतन्द्रो हव्यं वहसि हविष्कृत आदिद्देवेषु राजसि २

१२ ३ १२ ३ १२ ३ १ २ ३२
४७ अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः
२ ३ २ ३१ २र १२ ३ १ २ ३ १२
उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः ३

३ २३ २ ३१ २३ १ २ ३ १२ ३२
४८ अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे
३ १ २ ३ २ ३ २ ३ १२
ऋचा यामि मरुतो ब्रह्मणस्पते देवा अवो वरेण्यम् ४

३ १ २ ३ १ २३ १ २ ३१ २
४९ अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम्
३ २ ३ १ २ ३२उ ३ १ २ ३१२ ३ २
अग्निꣳ राये पुरुमीढ श्रुतं नरोऽग्निः सुदीतये छर्दिः ५

३ १ २ ३ १ २ ३ १२ ३ १ २
५० श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः
१ २ ३ १ २ ३ १ २३ १ २ ३ १ २ ३२
आ सीदतु बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे ६

१ २र ३ २३२उ ३ २ ३ १ २
५१ प्र दैवोदासो अग्निर्देव इन्द्रो न मज्मना
१२ ३१२ ३ १ २र ३ १ २र ३ १२
अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि ७

२ ३ १ २र ३ १ २३ १ २ ३ १ २र
५२ अध ज्मो अध वा दिवो बृहतो रोचनादधि
३ १ २ ३क २र ३२उ ३ १ २
अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ८

१ २ ३ २उ ३१ २र ३ २
५३ कायमानो वना त्वं यन्मातॄरजगन्नपः
१ २र ३ १ २ ३ १ २ ३ २ ३ २उ ३ १ २
न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभुवः ९

१ २र ३ १ २ ३ २ ३ १ २ ३ १ २
५४ नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते
३ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः १०

इति पञ्चमी दशतिः ५ पञ्चमः खण्डः ५

इति प्रथमप्रपाठके प्रथमोऽर्धः

(६)

(१-८) १, ७ वसिष्ठो मैत्रावरुणिः २, ३, ५ कण्वो घौरः ४ सौभरिः काण्वः ६ उत्कीलः कात्यः ८ विश्वामित्रो गाथिनः ॥ अग्निः २ ब्रह्मणस्पतिः ३ यूपः ॥

बृहती ॥

अथ प्रथमप्रपाठकस्य द्वितीयोऽर्धः १

३ १ २ ३ २ ३ १ २ ३ १ २
५५ देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम्
१ २ ३ २ ३ १ २ ३ १ २र ३ १ २
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते १

२ ३ १ २ ३ २ ३ २ ३क २र ३ १ २
५६ प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता
१ २ ३१ २र ३ १ २ ३ २ ३ १ २
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः २

३ २ ३ १ २ ३ २ ३ १ २ २ १ २र ३ २
५७ ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता
३ १ २र ३ १ २ ३ २ ३ १ २ २ १ २ ३ १ २
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ३

२उ ३ १ २र ३ २ ३ १ २ ३ १ २
५८ प्र यो राये निनीषति मर्तो यस्ते वसो दाशत्
२ ३१ २ ३ २ ३ १ २ ३ १ २
स वीरं धत्ते अग्न उक्थशँसिनं त्मना सहस्रपोषिणम् ४

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
५९ प्र वो यह्वं पुरूणां विशां देवयतीनाम्
३ २ ३ २ ३ १ २ ३ २उ ३ २ ३ १ २
अग्निँसूक्तेभिर्वचोभिर्वृणीमहे यँसमिदन्य इन्धते ५

३ २ ३ २ ३ २ ३ २ ३ १ २र
६० अयमग्निः सुवीर्यस्येशे हि सौभगस्य
१ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ६

१ २ ३ १ २ ३ १ २र ३ २
६१ त्वमग्ने गृहपतिस्त्वँ होता नो अध्वरे
१ २र ३ १ २ ३ २ ३ १ २ ३ १ २
त्वं पोता विश्ववार प्रचेता यक्षि यासि च वार्यम् ७

१ २ ३ १ २र ३ १ २
६२ सखायस्त्वा ववृमहे देवं मर्तास ऊतये
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
अपां नपातँ सुभगँ सुदँससँ सुप्रतूर्तिमनेहसम् ८

इति षष्ठी दशतिः ६ षष्ठः खण्डः ६

(७)

(१-१०) १ श्यावाश्वो वामदेवो वा २ उपस्तुतो वार्हिष्टव्यः ३ बृहदुक्थो वामदेव्यः ४ कुत्स आंगिरसः ५-६ भरद्वाजो बार्हस्पत्यः ७ वामदेवो गौतमः ८, १० वसिष्ठो

मैत्रावरुणिः ९ त्रिशिरास्त्वाष्ट्रः ॥ १, ३, ५, ६ त्रिष्टुप् २ ४ जगती १०

त्रिपाद्विराड्गायत्री ॥

१ २ ३ १ २ ३ १ २र ३ १ २
६३ आ जुहोता हविषा मर्जयध्वं नि होतारं गृहपतिं दधिध्वम्
३ २ ३ १ २र ३ १ २ ३ १ २ ३ २ ३क २र
इडस्पदे नमसा रातहव्यँ सपर्यता यजतं पस्त्यानाम् १

३ २उ ३ १ २ ३ २ ३ २उ ३ १ २ ३ २ ३ १ २
६४ चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावन्वेति धातवे
३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २र ३ २ ऽ १ २
अनूधा यदजीजनदधा चिदा ववक्षत्सद्यो महि दूत्यां३ चरन् २

३ २ ३ १ २ ३१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
६५ इदं त एकं पर उ त एकं तृतीयेन ज्योतिषा सं विशस्व
३ १ २ ३ २ऽ १ २ ३ २ ३ १ २ ३ २ ३ १ २
संवेशनस्तन्वे३ चारुरेधि प्रियो देवानां परमे जनित्रे ३

३२उ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
६६ इमँ स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया
३ २उ ३ १ २ ३ १ २र ३ १ २र ३ १ २र
भद्रा हि नः प्रमतिरस्य सँसद्यग्ने सख्ये मा रिषामा वयं तव ४

३ १ २ ३ १ २३ १ २ ३ १ २ ३२ ३२उ ३ २ ३ २
६७ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्
३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
कविँ सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः ५

२उ ३ १ २र ३ २ ३ १ २ ३ २
६८ वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरग्ने जनयन्त देवाः
२ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३१ २
तं त्वा गिरः सुष्टुतयो वाजयन्त्याजिं न गिर्ववाहो जिग्युरश्वाः ६

२ ३ १ २ ३१ २ ३ १ २र ३ २ ३ १ २
६९ आ वो राजानमध्वरस्य रुद्रँ होतारँ सत्ययजँ रोदस्योः
३ २ ३ १ २ ३ २३ २ ३ १ २ ३ १ २
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ७

३ २उ ३ २ ३ १ २र ३ २ ३ १ २ ३ १ २ ३ १ २
७० इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन
१ २ ३ १ २ ३ २ ३ १ २र ३ १ २
नरो हव्येभिरीडते सबाध आग्निरग्रमुषसामशोचि ८

२ ३१ २ ३ १ २ ३ १ २र ३ १ २
७१ प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो ररवीति
३ २ ३१ २ ३ १ २र ३ २३१ २ ३ १ २
दिवश्चिदन्तादुपमामुदानडपामुपस्थे महिषो ववर्ध ९

३ २उ ३ १ २ ३२ ३१ २ ३ २
७२ अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम्
३१ २ ३१२ ३ २
दूरेदृशं गृहपतिमथव्युम् १०

इति सप्तमी दशतिः ७ सप्तमः खण्डः ७

(८)

(१-८) १ बुधगविष्ठिरावात्रेयौ २, ५ वत्सप्रिर्भालन्दनः ३ भरद्वाजो बार्हस्पत्यः ४, ७ विश्वामित्रो गाथिनः ६ वसिष्ठो मैत्रावरुणिः ८ पायुर्भारद्वाजः ॥ अग्नेः ३ पूषा ॥

त्रिष्टुप् ॥

१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३१ २ ३ २३ १ २
७३ अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम्
३ १ २३ २ ३ २३ १ २ ३ २ ३१२ ३ २ ३१ २
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ १

२ ३ १ २ ३१ २ ३ २ ३१ २र ३ २ ३ १ २
७४ प्र भूर्जयन्तं महां विपोधां मूरैरमूरं पुरां दर्माणम्
१ २ ३ २ ३ १ २र ३ १ २ ३ १ २र ३ २
नयन्तं गीर्भिर्वना धियं धा हरिश्मश्रुं न वर्मणा धनर्चिम् २

३ २ ३ १ २ ३१ २ ३ १ २र ३ १ २ ३ १ २
७५ शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि
२ ३ २ ३ १ २र ३१ २ ३ २ ३ १२
विश्वा हि माया अवसि स्वधावन्भद्रा ते पूषन्निह रातिरस्तु ३

१ २ ३१ २ ३ १ २र ३ १ २र
७६ इडामग्ने पुरुदँसँ सनिं गोः शश्वत्तमँ हवमानाय साध
१ २ ३१ २र ३ २उ ३ १ २ ३ १ २ ३ २
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ४

१ २र ३ २ ३ १ २ ३ २३१ २ ३ १ २ ३ २
७७ प्र होता जातो महान्नभोविन्नृषद्मा सीददपां विवर्ते

२ ३ २ ३ २ ३१ २र ३ १ २र ३१ २३ २
दधद्यो धायी सुते वयाँसि यन्ता वसूनि विधते तनूपाः ५

२ ३ २३१ २ ३ २ ३ १ २ ३ १२३ १ २
७८ प्र सम्राजमसुरस्य प्रशस्तं पुँसः कृष्टीनामनुमाद्यस्य
१ २ ३ २ ३१ २ ३ १ २ ३ १ २३ १ २
इन्द्रस्येव प्र तवसस्कृतानि वन्दद्वारा वन्दमाना विवष्टु ६

३२ ३ १ २ ३१ २ ३ १ २ ३१ २र ३ १ २
७९ अरण्योर्निहितो जातवेदा गर्भ इवेत्सुभृतो गर्भिणीभिः
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३क २र ३ २
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ७

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
८० सनादग्ने मृणसि यातुधानान्न त्वा रक्षाँसि पृतनासु जिग्युः
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अनु दह सहमूरान्कयादो मा ते हेत्या मुक्षत दैव्यायाः ८

इति अष्टमी दशतिः ८ अष्टमः खण्डः ८

(९)

(१-१०) १ गय आत्रेयः २ वामदेवः ३, ४ भरद्वाजो बार्हस्पत्यः ५ द्वितो मृक्तवाहा आत्रेयः ६ वसूयव आत्रेयाः ७, ९ गोपवन आत्रेयः ८ पूरुरात्रेयः १० वामदेवः कश्यपो वा मारीचो मनुर्वा वैवस्वत उभौ वा ॥ अग्निः ॥ अनुष्टुप् ॥

२ ३ १ २३ १ २ ३ २ ३ १ २
८१ अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो
१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
प्र नो राये पनीयसे रत्सि वाजाय पन्थाम् १

१ २ ३२उ ३ २ ३ १ २ ३ १ २
८२ यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्यः
३ १ २ ३ १ २ ३ १ २र ३ १ २
आजुह्वद्धव्यमानुषक्शर्म भक्षीत दैव्यम् २

३ १ २ ३ १ २ ३ २उ ३ १ २र
८३ त्वेषस्ते धूम ऋण्वति दिवि सं च्छुक्र आततः
२ ३ २उ ३ २उ ३ १ २ ३ १ २
सूरो न हि द्युता त्वं कृपा पावक रोचसे ३

१ २र ३ १ २र ३ १ २र
८४ त्वꣳहि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे
१ २ ३ २ ३ १ २ ३ १ २र
त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ४

३ २३ १ २ ३ २ ३ १ २ ३ १ २
८५ प्रातरग्निः पुरुप्रियो विष स्तवेतातिथिः
२ ३ २ ३ १ २ ३ १ २र ३ १ २
विश्वे यस्मिन्नमर्त्ये हव्यं मर्तास इन्धते ५

१ २र ३ २ ३ १ २ ३ १ २
८६ यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो
१ २ ३ २ ३ २उ ३ १ २
महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ६

३ १ २ ३ १ २ ३ १ २ ३ २
८७ विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम्
३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ७

३ २उ ३ २ ३ १ २र ३ २ ३ १ २
८८ बृहद्वयो हि भानवेऽर्चा देवायाग्नये
२ ३ १ २र ३ १ २ ३ २ ३ २
यं मित्रं न प्रशस्तये मर्तासो दधिरे पुरः ८

१ २ ३ १ २ ३ १ २ ३ १ २र
८९ अगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम्
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
य स्म श्रुतर्वन्नार्क्षे बृहदनीक इध्यते ९

३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २
९० जातः परेण धर्मणा यत्सवृद्भिः सहाभुवः
३ २उ ३ १ २ ३ २ ३ २ ३ १ २र ३ २
पिता यत्कश्यपस्याग्निः श्रद्धा माता मनुः कविः १०

इति नवमी दशतिः ९ नवमः खण्डः ९

(१०)

(१-६) १ अग्निस्तापसः २, ३ वामदेवः कश्यपः, असितो देवलो वा ४
सोमाहुतिर्भार्गवः ५ पायुर्भारद्वाजः ६ प्रस्कण्वः काण्वः ॥ अग्निः १ विश्वेदेवाः २

अङ्गिराः ॥ अनुष्टुप् ॥

२ ३ १ २३ १२ ३ २३ १२
९१ सोमँ राजानं वरुणमग्निमन्वारभामहे
३ २उ ३ १२ ३ १२ ३ २३ १ २
आदित्यं विष्णुँ सूर्यं ब्रह्माणं च बृहस्पतिम् १

३२ ३२ ३ १२ ३२ ३ १ २र
९२ इत एत उदारुहन्दिवः पृष्ठान्या रुहन्
२ ३ २ ३ १ २ ३ १ २र
प्र भूर्जयो यथा पथोद्यामङ्गिरसो ययुः २

३१ २ ३२ ३ १ २३ १ २
९३ राये अग्ने महे त्वा दानाय समिधीमहि
१ २ ३ २ ३१ २३ १ २ ३१२ ३ २
ईडिष्वा हि महे वृषं द्यावा होत्राय पृथिवी ३

३ २ ३ २ ३२३ २३ २उ ३ २३ २
९४ दधन्वे वा यदीमनु वोचद्ब्रह्मेति वेरु तत्
२३ १ २ ३ १ २ ३ २३ १ २
परि विश्वानि काव्या नेमिश्चक्रमिवाभुवत् ४

१ २३ १२ ३ १२ ३ २ ३२३ १ २
९५ प्रत्यग्ने हरसा हरः शृणाहि विश्वतस्परि
३ १२ ३ २ ३ २३क २र ३क २र
यातुधानस्य रक्षसो बलं न्युब्जवीर्यम् ५

१२३ १ २ ३२ ३ १ २ ३ २ ३२
९६ त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत
१ २ ३२उ ३ १२ ३१२
यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ६

इति दशमी दशतिः १० दशमः खण्डः १०

इति प्रथमप्रपाठके द्वितीयोऽर्धः प्रथमः प्रपाठकश्च समाप्तः १

अथ द्वितीयप्रपाठके प्रथमोऽर्धः

(१)

(१-१०) दीर्घतमा औचथ्यः २, ४ विश्वामित्रो गाथिनः ३ गोतमो राहूगणः ५ त्रित आप्त्यः ६ इरिम्बिठिः काण्वः ७, ८, १० विश्वमना वैयश्वः ९ ऋजिश्वा भारद्वाजः ॥

अग्निः ५ पवमानः सोमः ६ अदितिः ९ विश्वे देवाः ॥ उष्णिक् ॥

३ १ २ ३ १ २ ३ १२ ३ १ २ ३ २
९७ पुरु त्वा दाशिवाँ वोचेऽरिरग्ने तव स्विदा
३ १ २ ३२उ ३ १ २
तोदस्येव शरण आ महस्य १

१ २र ३ २उ ३ १ २ ३ २
९८ प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत्
३ १ २र ३ १ २ ३ २ ३ १ २
विपां ज्योतीँषि बिभ्रते न वेधसे २

२ ३ १ २ ३ १ २ ३ १ २
९९ अग्ने वाजस्य गोमत ईशानः सहसो यहो
३ १ २ ३ २ ३ १ २
अस्मे देहि जातवेदो महि श्रवः ३

२ ३ १ २ ३२ ३ १ २ ३१ २
१०० अग्ने यजिष्ठो अध्वरे देवां देवयते यज
१ २ ३ १ २र ३ २ ३ १ २
होता मन्द्रो वि राजस्यति स्रिधः ४

३ २ ३ २ ३ १ २ ३ १ २र ३ २
१०१ जज्ञानः सप्त मातृभिर्मेधामाशासत श्रिये
३ २ ३ १ २ ३ १ २ ३ २
अयं ध्रुवो रयीणां चिकेतदा ५

३ २उ ३ १ २ ३ १ २र ३ १ २
१०२ उत स्या नो दिवा मतिरदितिरूत्यागमत्
१ २र ३ १ २ ३ २ ३ ३ २
सा शन्ताता मयस्करदप स्रिधः ६

१ २ ३ १ २ ३ २ १ २ ३ १ २
१०३ ईडिष्वा हि प्रतीव्याइँ यजस्व जातवेदसम्
३ १ २ ३ १ २
चरिष्णुधूममगृभीतशोचिषम् ७

१ २र ३ १ २ ३ २ ३ १ २ ३ १ २
१०४ न तस्य मायया च न रिपुरीशीत मर्त्यः
२ ३ १ २ ३ १ २ ३ १ २
यो अग्नये ददाश हव्यदातये ८

२३ १ २ ३२ ३२ ३१२ ३क २र
१०५ अप त्यं वृजिनँरिपुँस्तेनमग्ने दुराध्यम्
१ २ ३ २ ३२
दविष्ठमस्य सत्पते कृधी सुगम् ९

३क २र ३ २ १ २
१०६ श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते
२ ३ २३ १२ ३ १ २
नि मायिनस्तपसा रक्षसो दह १०

इति प्रथमा दशतिः १ एकादशः खण्डः ११

(२)

(१-८) १ प्रयोगो भार्गवः २, ३, ५-७ सौभरिः काण्वः ४ प्रयोगो भार्गवः सौभरिः काण्वो वा ८ विश्वमना वैयश्वः ॥ अग्निः ॥ उष्णिक् ॥

१ २र ३ १ २ ३२ ३ १ २
१०७ प्र मँहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे
३ १ २ ३१२
उपस्तुतासो अग्नये १

१ २र ३ २ ३ १ २ ३ १ २ ३ १ २
१०८ प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः
२ ३ २ ३ १ २र
यस्य त्वँसख्यमाविथ २

१ २ ३क २र ३ १ २ ३ १ २३ १ २
१०९ तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे
३ २ ३ १२
देवत्रा हव्यमूहिषे ३

१ २ ३ १ २ ३ १ २३ १ २ ३ २ ३२
११० मा नो हृणीथा अतिथिं वसुरग्निः पुरुप्रशस्त एषः
२ ३ १ २ ३२
यः सुहोता स्वध्वरः ४

३ १ २ ३ १ २र ३ २ ३ १ २ ३ १ २ ३२
१११ भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः
३ २ ३१ २र
भद्रा उत प्रशस्तयः ५

१ २ ३ १ २ ३ १ २र३ १ २
११२ यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम्
३ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम् ६

१ २ ३ १ २र३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
११३ तदग्ने द्युम्नमा भर यत्सासाहा सदने कं चिदत्रिणम्
३ १ २र ३क २र
मन्युं जनस्य दूढ्यम् ७

१ २र ३ १ २ ३ १ २र ३ १ २ ३ २
११४ यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशे
२उ ३ २उ ३ १ २
विश्वेदग्निः प्रति रक्षाँसि सेधति ८

इति द्वितीया दशतिः २ द्वादशः खण्डः १२

इत्याग्नेयं पर्व काण्डम् वा ॥ इति प्रथमोऽध्यायः ॥ इति प्रथमं पर्व ॥

अथ ऐन्द्रं काण्डम्

अथ द्वितीयोऽध्यायः

(३)

(१-१०) १ शंयुर्बार्हस्पत्यः २ श्रुतकक्षः सुकक्षो वा आंगिरसः ३ हर्यतः प्रागाथः ४, ५ श्रुतकक्षः आंगिरसः ६ देवजामय इन्द्रमातरः ऋषिकाः ७, ८ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ ९, १० मेधातिथिः काण्वः प्रियमेधश्चांगिरसः ॥ इन्द्रः ॥ गायत्री ॥

१ २ ३ १ २र ३ २ ३ १ २
११५ तद्वो गाय सुते सचा पुरुहूताय सत्वने
२उ ३ २ ३ १ २
शं यद्गवे न शाकिने १

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
११६ यस्ते नूनँशतक्रतविन्द्र द्युम्नितमो मदः
१ २ ३ १ २र
तेन नूनं मदे मदेः २

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
११७ गाव उप वदावटे महि यज्ञस्य रप्सुदा
३ १ २र ३ १ २
उभा कर्णा हिरण्यया ३

२३ १ २ ३ १ २ ३ २३ १ २
११८ अरमश्वाय गायत श्रुतकक्षारं गवे
२३ १ २ ३ १ २
अरमिन्द्रस्य धाम्ने ४

१ २र ३ २ ३ २ ३ १ २
११९ तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे
१ २र ३ १ २
स वृषा वृषभो भुवत् ५

१ २ ३ २ ३ २ ३ १ २ ३ १ २र
१२० त्वमिन्द्र बलादधि सहसो जात ओजसः
१ २र ३ १ २र
त्वँसन्वृषन्वृषेदसि ६

३ १ २र ३ २उ ३ १ २
१२१ यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत्
३ १ २ ३ २ ३ २
चक्राण ओपशं दिवि ७

१ २ ३ २उ ३ १ २र ३ २ ३ २ ३ २
१२२ यदिन्द्राहं यथा त्वमीशीय वस्व एक इत्
३ २ ३ १ २
स्तोता मे गोसखा स्यात् ८

१ २ ३ १ २ ३ १ २ ३ १ २
१२३ पन्यंपन्यमित्सोतार आ धावत मद्याय
१ २ ३ २ ३ १ २
सोमं वीराय शूराय ९

३ १ २ ३२उ ३ २ ३ १ २ ३ १ २
१२४ इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम्
१ २ ३ १ २
अनाभयिन्नरिमा ते १०

इति तृतीया दशतिः ३ प्रथमः खण्डः १

(४)

(१-१०) १, २ सुकक्षश्रुतकक्षौ ३ भारद्वाजः ४ श्रुतकक्षः ५, ६ मधुच्छन्दा वैश्वामित्रः

७, ९, १० त्रिशोकः काण्वः ८ वसिष्ठो मैत्रावरुणिः ॥ इन्द्रः ॥ गायत्री ॥

२उ ३ २ ३ १ २ ३ १ २र
१२५ उद्घेदभि श्रुतामघं वृषभं नर्यापसम्
१ २
अस्तारमेषि सूर्य १

२ ३ १ २र ३ १ २ ३ १ २
१२६ यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य
२ ३ १ २ ३ १ २
सर्वं तदिन्द्र ते वशे २

१ २र ३ २ ३ १ २ ३ २ ३ १ २
१२७ य आनयत्परावतः सुनीती तुर्वशं यदुम्
२ ३ २ ३ २ ३ १ २
इन्द्रः स नो युवा सखा ३

१ २ ३ २ऽ २ ३ १ २ ३ १ २र
१२८ मा न इन्द्राभ्या३ दिशः सूरो अक्तुष्वा यमत्
२ ३ १ २ ३ २
त्वा युजा वनेम तत् ४

१ २ ३ २ ३ २ ३ १ २ ३ १ २
१२९ एन्द्र सानसिँ रयिँ सजित्वानँ सदासहम्
१ २ ३ १ २
वर्षिष्ठमूतये भर ५

१ २ ३ १ २ ३२उ ३ १ २
१३० इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे
१ २ ३ १ २ ३ १ २
युजं वृत्रेषु वज्रिणम् ६

१ २ ३ १ २ ३ १ २र ३ १ २
१३१ अपिबत्कद्रुवः सुतमिन्द्रः सहस्रबाह्वे
१ २ ३ १ २
तत्राददिष्ट पौँस्यम् ७

३ १ २ ३ २ ३ १ २र
१३२ वयमिन्द्र त्वायवोऽभि प्र नोनुमो वृषन्
३ २ ऽऽऽ १ २
विद्धी त्वा ३ स्य नो वसो ८

२ ३ २ ३ २ ३ १२ ३१ २ ३ १ २३२
१३३ आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्
२ ३ २ ३ २ ३ १ २
येषामिन्द्रो युवा सखा ९

३ २उ ३ २३ २३ २३ १ २ ३ १ २र
१३४ भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः
१ २ ३१ २र
वसु स्पार्हं तदा भर १०

इति चतुर्थी दशतिः ४ द्वितीयः खण्डः २

(५)

(१-१०) १ कण्वो घौरः २ त्रिशोकः काण्वः ३ वत्सः काण्वः ४ कुसीदी काण्वः ५ मेधातिथिः काण्वः ६ श्रुतकक्षः आंगिरसः ७ श्यावाश्व आत्रेयः ८ प्रगाथः काण्वः ९ वत्सः काण्वः १० इरिंबिठिः काण्वः ॥ इन्द्रः ॥ गायत्री ॥

३१२ ३ २ ३ १ २३ १ २र
१३५ इहेव शृण्व एषां कशा हस्तेषु यद्वदान्
१ २र ३१२
नि यामं चित्रमृञ्जते १

३ १ २ ३ १ २ ३ १ २ ३ १२
१३६ इम उ त्वा वि चक्षते सखाय इन्द्र सोमिनः
३ १२ ३ १ २ ३ २
पुष्टावन्तो यथा पशुम् २

१ २ ३ २३ २ ३ १ २ ३१२
१३७ समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः
३ १२३ १ २
समुद्रायेव सिन्धवः ३

३ २ ३ १ २र ३१ २र ३ २
१३८ देवानामिदवो महत्तदा वृणीमहे वयम्
१ २३ १ २३१२
वृष्णामस्मभ्यमूतये ४

३ २ ३ १२ ३ १ २
१३९ सोमाना॑ँस्वरणं कृणुहि ब्रह्मणस्पते
३ १२३ १ २ ३ २
कक्षीवन्तं य औशिजः ५

१ २ ३ १ २ ३ १ २र
१४० बोधन्मना इदस्तु नो वृत्रहा भूर्यासुतिः
३ १२ ३ २ ३ १२
शृणोतु शक्र आशिषम् ६

३ १ २ ३ १ २ ३ १ २
१४१ अद्य नो देव सवितः प्रजावत्सावीः सौभगम्
१ २ ३ १ २
परा दुःष्वप्न्यँसुव ७

२ऽ १ २ ३ १ २र ३ २ ३ १ २
१४२ क्वा३स्य वृषभो युवा तुविग्रीवो अनानतः
३ १ २र
ब्रह्मा कस्तँसपर्यति ८

३ १ २ ३ १ २ ३ १ २ ३ १ २
१४३ उपह्वरे गिरीणाँसङ्गमे च नदीनाम्
३ १ २र
धिया विप्रो अजायत ९

२ ३ १ २ ३ १ २र ३ १ २ ३ २
१४४ प्र सम्राजं चर्षणीनामिन्द्रँस्तोता नव्यं गीर्भिः
१२ ३ २३ १ २
नरं नृषाहं मँहिष्ठम् १०

इति पञ्चमी दशतिः ५ तृतीयः खण्डः ३

इति द्वितीयप्रपाठके प्रथमोऽर्धः १

(६)

(१-१०) १ श्रुतकक्षः आङ्गिरसः २ मेधातिथिः काण्वः ३ गोतमो राहूगणः ४ भरद्वाजो बार्हस्पत्यः ५ बिन्दुः पूतदक्षो वा आङ्गिरसः ६, ७ श्रुतकक्षः सुकक्षो वा आङ्गिरसः ८ वत्सः काण्वः ९ शुनःशेप आजीगर्तिः १० शुनःशेपो आजीगर्तिः वामदेवो वा ॥ इन्द्रः, ५ मरुतः ॥ गायत्री

१ २ ३ १ २ ३१ २ ३ १ २
१४५ अपादु शिप्रयन्धसः सुदक्षस्य प्रहोषिणः
२ ३ २ ३ १ २
इन्द्रोरिन्द्रो यवाशिरः १

३ १ २ ३ १ २र ३ १२
१४६ इमा उ त्वा पुरूवसोऽभि प्र नोनवुर्गिरः
१ २ ३ २उ ३ १ २
गावो वत्सं न धेनवः २

२उ ३ १२ ३ २ ३ १ २ ३क २र
१४७ अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्
३ २ ३ १ २ ३ २
इत्था चन्द्रमसो गृहे ३

२उ ३ १ २ ३ १ २ ३ २३ १ २र
१४८ यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः
१ २ ३ १ २ ३ १ २
तत्र पूषाभुवत्सचा ४

१ २ ३ १ २ ३ २ ३ २ ३ १ २
१४९ गौर्धयति मरुताँश्रवस्युर्माता मघोनाम्
३ २उ ३ १ २
युक्ता वह्नी रथानाम् ५

१ २ ३ १ २ ३ २ ३ १ २
१५० उप नो हरिभिः सुतं याहि मदानां पते
१ २ ३ १ २ ३ २
उप नो हरिभिः सुतम् ६

३ १ २र ३ १ २ ३ १ २ ३ २
१५१ इष्टा होत्रा असृक्षतेन्द्रं वृधन्तो अध्वरे
१ २ ३ १ २र
अच्छावभृथमोजसा ७

३ २उ ३ १ २ ३ २ ३ १ २ ३ १ २
१५२ अहमिद्धि पितुष्परि मेधामृतस्य जग्रह
३ १ २र
अहँ सूर्य इवाजनि ८

३ १ २ ३ २ ३ १ २ ३ १ २
१५३ रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः
३ २ ३ २ ३ १ २
क्षुमन्तो याभिर्मदेम ९

१२ ३ १ २ ३ १ २ ३ २
१५४ सोमः पूषा च चेततुर्विश्वासाँ सुक्षितीनाम्
३ २ २क २र ३ २
देवत्रा रथ्योर्हिता १०

इति षष्ठी दशतिः ६ चतुर्थः खराडः ४

(७)

(१-१०) १, ४ श्रुतकक्षः सुकक्षो वा आङ्गिरसः २ वसिष्ठो मैत्रावरुणिः ३ मेधातिथिः काराव: प्रियमेधश्चांगिरसः ५ इरिम्बिठिः कारावः ६, १० मधुच्छन्दा वैश्वामित्रः ७ त्रिशोकः कारावः ८ कुसीदी कारावः ९ शुनःशेप आजीगर्तिः ॥ इन्द्रः ॥ गायत्री ॥

२ ३ २ ३ १ २ ३ १ २ ३ १ २र
१५५ पान्तमा वो अन्धस इन्द्रमभि प्र गायत
३ १२ ३१ २३ १ २ ३ २
विश्वासाहँ शतक्रतुं मँहिष्ठं चर्षणीनाम् १

२ ३ १ २३ १२३ १२
१५६ प्र व इन्द्राय मादनँ हर्यश्वाय गायत
१ २ ३ १ २
सखायः सोमपाव्ने २

३१२ ३ १२ ३ १ २ ३२३ १ २
१५७ वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः
१ २ ३ १ २
कराग्वा उक्थेभिर्जरन्ते ३

१ २३ १२ ३१ २र ३ १२
१५८ इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः
३ १ २ ३१ २
अर्कमर्चन्तु कारवः ४

३१ २ ३ २ ३ १२ ३ १ २ ३ १ २
१५९ अयं त इन्द्र सोमो निपूतो अधि बर्हिषि
१ २ ३ २उ ३ १ २
एहीमस्य द्रवा पिब ५

३ २३१२ ३१ २ ३१२
१६० सुरूपकृत्नुमूतये सुदुघामिव गोदुहे
३ २ ३ १ २
जुहूमसि द्यविद्यवि ६

३ १ २ ३ २ ३ १ २ ३ १ २
१६१ अभि त्वा वृषभा सुते सुतँसृजामि पीतये
३ १ २ ३ १ २
तृम्पा व्यश्नुही मदम् ७

१ २ ३ १ २र ३ १ २ ३ २
१६२ य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः
१ २र ३ १ २
पिबेदस्य त्वमीशिषे ८

१ २ ३ १ २३ १ २
१६३ योगेयोगे तवस्तरं वाजेवाजे हवामहे
१ २ ३ १ २ ३ १ २
सखाय इन्द्रमूतये ९

२उ ३ १ २ ३ १ २ ३ १ २र
१६४ आ त्वेता नि षीदतेन्द्रमभि प्र गायत
१ २ ३ १ २
सखायः स्तोमवाहसः १०

इति सप्तमी दशतिः ७ पञ्चमः खण्डः ५

(८)

(१-१०) १ विश्वामित्रो गाथिनः २ मधुच्छन्दा विश्वामित्रः ३ कुसीदी काण्डः ४ प्रियमेध आंगिरसः ५, ८ वामदेवो गौतमः ६, ९ श्रुतकक्षः सुकक्षो वा आंगिरसः ७ मेधातिथिः काण्वः १० बिन्दुः पूतदक्षो वा आंगिरसः ॥ इन्द्रः ॥ गायत्री ॥

३ १ २र ३ १ २
१६५ इदँ ह्यन्वोजसा सुतँ राधानां पते
२ ३ ३ऽ १ २
पिबा त्वा३स्य गिर्वणः १

३ १ २र ३१ २ ३ १ २ ३ १ २
१६६ महाँइन्द्रः पुरश्च नो महित्वमस्तु वज्रिणे
१ २र ३ १ २र
द्यौर्न प्रथिना शवः २

१ २र ३ १ २ ३ २ ३ १ २र
१६७ आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभँसं गृभाय

३ १ २र
महाहस्ती दक्षिणेन ३

३ १ २र ३१ २ ३ १ २ ३ २
१६८ अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे
३ २ ३ २ ३ १ २
सूनुँ सत्यस्य सत्पतिम् ४

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
१६९ कया नश्चित्र आ भुवदूती सदावृधः सखा
२ ३ १ २ ३ २
कया शचिष्ठया वृता ५

१ २ ३ ३ १ २ ३ १ २
१७० त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम्
१ २ ३ १ २
आ च्यावयस्यूतये ६

१ २ ३ २ ३ १ २ ३ १ २र ३ १ २
१७१ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्
३ २ ३ १ २
सनिं मेधामयासिषम् ७

२ ३ १ २ ३ २ ३ २उ ३क २र ३ १ २
१७२ ये ते पन्था अधो दिवो येभिर्व्यश्वमैरयः
३ १ २ ३ १ २
उत श्रोषन्तु नो भुवः ८

३ १ २ ३ २ ३ २ ३ १ २
१७३ भद्रंभद्रं न आ भरेषमूर्जँ शतक्रतो
१ २ ३ १ २
यदिन्द्र मृडयासि नः ९

२ ३ १ २ ३ २ ३ १ २र ३ १ २
१७४ अस्ति सोमो अयँ सुतः पिबन्त्यस्य मरुतः
३ २ ३ १ २ ३ १ २
उत स्वराजो अश्विना १०

इति अष्टमी दशतिः ८ षष्ठः खण्डः ६

(६)

(१-१०) १ देवजामय इन्द्रमातरः २ गोधा ऋषिकाः ३ दध्यङ्ङाथर्वणः ४ प्रस्कण्वः काण्वः ५ गोतमो राहूगणः ६ मधुच्छन्दा वैश्वामित्रः ७ वामदेवो गौतमः ८ वत्सः काण्वः ९ शुनःशेप आजीगर्तिः १० उलो वातायनः ॥ इन्द्रः ॥ गायत्री ॥

३ १ २ ३ २ ३ १ २ ३१ २र
१७५ ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते
३ १ २ ३ १ २
वन्वानासः सुवीर्यम् १

१ २ ३ १ २र
१७६ नकि देवा इनीमसि न क्या योपयामसि
३ १ २
मन्त्रश्रुत्यं चरामसि २

३ १ २र ३ १ २ ३ १ २
१७७ दोषो आगाद्बृहद्गाय द्युमद्गामन्नाथर्वण
३ २ ३ १ २ ३ १२
स्तुहि देवँ सवितारम् ३

३ २ ३ १ २र ३क २र ३ २ ३ २
१७८ एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः
३१ २ ३ २
स्तुषे वामश्विना बृहत् ४

१ २ ३ २ ३ १ २ ३ १ २र
१७९ इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः
३ १ २ ३ १ २र
जघान नवतीर्नव ५

२र ३ १ २र १ १ २ ३ १ २
१८० इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः
३ १ २ ३ १ २र
महाँ अभिष्टिरोजसा ६

१ २र ३ २ ३ २ ३ १ २
१८१ आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि
३ २ ३ १ २ ३ १ २
महान्महीभिरूतिभिः ७

२ ३ १ २ ३२उ ३ १ २
१८२ ओजस्तदस्य तित्विष उभे यत्समवर्तयत्

२ ३ १ २ ३ १ ३
इन्द्रश्चर्मेव रोदसी ८

३ १ २ ३ १ २ ३ १ २ ३ २
१८३ अयमु ते समतसि कपोत इव गर्भधिम्
२ ३ १ २
वचस्तच्चिन्न ओहसे ९

२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
१८४ वात आ वातु भेषजँ शम्भु मयोभु नो हृदे
२ ३ १ २
प्र न आयूँषि तारिषत् १०

इति नवमी दशतिः ९ सप्तमः खण्डः ७

(१०)

(१-९) १ कण्वो घौरः २, ३, ९ वत्सः काण्वः ४ श्रुतकक्षः सुकक्षो वा आङ्गिरसः
५ मधुच्छन्दा वैश्वामित्रः ६ वामदेवो गौतमः ७ इरिम्बिठिः काण्वः ८
सत्यधृतिर्वारुणिः ॥ इन्द्रः ॥ गायत्री ॥

१ २र ३ १ २ ३ १ २ ३ १ २ ३ २
१८५ यँ रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा
२ ३ १ २ ३ १ २
न किः स दभ्यते जनः १

३ २उ ३ १ २ ३ २ ३ १ २र ३ २
१८६ गव्यो षु णो यथा पुराश्वयोत रथया
३ २ ३ १ २
वरिवस्या महोनाम् २

३ १ २ ३ १ २ ३ १ २ ३ १ २
१८७ इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम्
३ २ ३ १ २ ३ १ २
एनामृतस्य पिप्युषीः ३

३ २ ३ १ २ ३ १ २र
१८८ अया धिया च गव्यया पुरुणामन्पुरुष्टुत
१ २र ३ १ २
यत्सोमेसोम आभुवः ४

३ २ ३ १२ ३ १ २ ३ १ २
१८९ पावका नः सरस्वती वाजेभिर्वाजिनीवती
३ १ २ ३ १ २
यज्ञं वष्टु धियावसुः ५

२ ३ १ २र ३ २उ ३ १ २
१९० क इमं नाहुषीष्वा इन्द्रँ सोमस्य तर्पयात्
२ ३ २ ३ १ २
स नो वसून्या भरात् ६

१ २ ३ २उ ३ २ ३ २ ३ १ २ ३ २
१९१ आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम्
२उ ३ १ २ ३ १ २
एदं बर्हिः सदो मम ७

१ २ ३ १ २र ३ २ ३ १ २ ३ २
१९२ महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः
३ २ ३ १ २
दुराधर्षं वरुणस्य ८

१ २ ३ १ २
१९३ त्वावतः पुरूवसो वयमिन्द्र प्रणेतः
१ २
स्मसि स्थातर्हरीणाम् ९

इति दशमी दशतिः १० अष्टमः खण्डः ८

इति द्वितीयप्रपाठके द्वितीयोऽर्धः द्वितीयः प्रपाठकश्च समाप्तः

अथ तृतीय प्रपाठके प्रथमोऽर्धः

(१)

(१-१०) १ प्रगाथः काण्वः २ विश्वामित्रो गाथिनः ३, १० वामदेवो गौतमः ४, ६ श्रुतकक्षः आङ्गिरसः ५ मधुच्छन्दा वैश्वामित्रः ७ गृत्समदः शौनकः ८, ९ भरद्वाजः बार्हस्पत्यः ॥ इन्द्रः ॥ गायत्री ॥

१ २ ३ १ २ ३ १ २र
१९४ उत्त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः
१ २ ३ १ २
अव ब्रह्मद्विषो जहि १

१ २ ३ १ २ ३२उ ३ १ २
१९५ गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे
२ ३ १ २ ३ १ २र
इन्द्र त्वादातमिद्यशः २

१ २ ३ २ ३ १ २ ३ २उ ३ १ २र ३ २
१९६ सदा व इन्द्रश्चर्कृषदा उपो नु स सपर्यन्
२ ३ २ ३२उ ३ १ २
न देवो वृतः शूर इन्द्रः ३

१ २ ३ १ २ ३ १ २ ३ १ २
१९७ आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः
२उ ३ १ २
न त्वामिन्द्राति रिच्यते ४

२ ३ २ ३ १ २ ३ १ २र ३ १ २३ १ २
१९८ इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः
२ ३ १ २
इन्द्रं वाणीरनूषत ५

१ २ ३ १ २ ३ १ २ ३ २ ३ २
१९९ इन्द्र इषे ददातु न ऋभुक्षणमृभुँरयिम्
३ १ २ ३ १ २
वाजी ददातु वाजिनम् ६

१ २ ३ २ ३ २ ३ २ ३ १ २र
२०० इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत्
२उ ३ १ २र
स हि स्थिरो विचर्षणिः ७

३ १ २ ३ १ २ ३ १ २ ३ १ २
२०१ इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः
१ २ ३ २उ ३ १ २
गावो वत्सं न धेनवः ८

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
२०२ इन्द्रा नु पूषणा वयँसख्याय स्वस्तये
३ २ ३ १ २
हुवेम वाजसातये ९

१ २ ३ १ २र३ १ २र
२०३ न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन्

२ ३२उ ३ २
न क्येवं यथा त्वम्  १०

इति प्रथमा दशतिः  १  नवमः खण्डः  ९

(२)

(१-१०)  १, ४ त्रिशोकः काण्वः  २  मधुच्छन्दा वैश्वामित्रः  ३  वत्सः काण्वः  ५ सुकक्ष आङ्गिरसः  ६, ९  वामदेवो गौतमः  ७  विश्वामित्रो गाथिनः  ८ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ  १०  श्रुतकक्षः सुकक्षो वा आङ्गिरसः  ॥  इन्द्रः  ॥ गायत्री  ॥

३१ २ ३ १ २ ३१ २र ३ १ २
२०४  तरणिं वो जनानां त्रदं वाजस्य गोमतः
३ २३ १ २
समानमु प्र शꣳसिषम्  १

१ २ ३ २३ २ ३ १ २र
२०५  असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत
३ १ २ ३१ २र
सजोषा वृषभं पतिम्  २

३ २ ३ २उ ३ २ ३२ ३ १ २ ३ २
२०६  सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा
३ २उ ३ १ २
मित्रास्पान्त्यद्रुहः  ३

२ ३ १ २ ३ २ ३१ ३ २र३ १ २
२०७  यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम्
१ २ ३ १ २र
वसु स्पार्हं तदा भर  ४

३१ २ ३१ २ ३ १ २र ३ २
२०८  श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम्
३ २३ १ २ ३ २
आशिषे राधसे महे  ५

१२ ३ १ २ ३ १ २ ३ १ २
२०९  अरं त इन्द्र श्रवसे गमेम शूर त्वावतः
१२ ३ १२
अरꣳ शक्र परेमणि  ६

३ १ २ ३ १ २ ३ १ २ ३ १ २
२१० धानावन्तं करम्भिणमपूपवन्तमुक्थिनम्
१ २ ३ १ २
इन्द्र प्रातर्जुषस्व नः ७

३ १ २र ३ १ २ ३ १२ ३ १ २
२११ अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः
२ ३ १ २र ३ १ २
विश्वा यदजय स्पृधः ८

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
२१२ इमे त इन्द्र सोमाः सुतासो ये च सोत्वाः
१ २
तेषां मत्स्व प्रभूवसो ९

१ २ ३ २ ३ १ २ ३ २ ३ १ २
२१३ तुभ्यँसुतासः सोमाः स्तीर्णं बर्हिर्विभावसो
३ १ २
स्तोतृभ्य इन्द्र मृडय १०

इति द्वितीया दशतिः २ दशमः खण्डः १०

(३)

(१-९) १ शुनःशेप आजीगर्तिः २ श्रुतकक्ष आंगिरसः ३ त्रिशोकः काण्वः ४ मेधातिथिः काण्वः ५ गोतमो राहूगणः ६ ब्रह्मातिथिः काण्वः ७ विश्वामित्रो गाथिनो जमदग्निर्वा ८ प्रस्कण्वः काण्वः ९ मेधातिथिः काण्वः ॥ इन्द्रः ६ अश्विनौ मित्रावरुणौ ८ मरुतः ९ विष्णुः ॥ गायत्री ॥

२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
२१४ आ व इन्द्रं कृविं यथा वाजयन्तः शतक्रतुम्
१ २ ३ १ २
मँहिष्ठँसिञ्च इन्दुभिः १

१ २ ३ १ २र ३ १ २
२१५ अतश्चिदिन्द्र न उपा याहि शतवाजया
३ २ ३ १ २
इषा सहस्रवाजया २

२ ३ १ २३ १ २ ३१ २ ३ २ ३१२
२१६ आ बुन्दं वृत्रहा ददे जातः पृच्छाद्वि मातरम्
२ ३ १ २र
क उग्राः के ह शृरिवरे ३

३ १ २ ३१ २ ३१ २
२१७ बृबदुक्थँहवामहे सृप्रकरस्नमूतये
१ २ ३ २ ३ १ २
साधः कृरवन्तमवसे ४

३ २ ३ १ २ ३ १ २ ३ २
२१८ ऋजुनीती नो वरुणो मित्रो नयति विद्वान्
३ २ ३ २ ३ १ २
अर्यमा देवैः सजोषाः ५

३ २ ३ २ ३ २ ३ २ ३ २ ३१ २
२१९ दूरादिहेव यत्सतोऽरुणप्सुरशिश्वितत्
२ ३ २ ३ १ २
वि भानुं विश्वथातनत् ६

१ २ ३१ २र
२२० आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्
२ ३ १ २
मध्वा रजाँसि सुक्रतू ७

२ ३ २ ३ २ ३ २३ १ २ ३ १ २
२२१ उदु त्ये सूनवो गिरः काष्ठा यज्ञेष्वत्नत
३ १ २ ३ १ २र
वाश्रा अभिज्ञु यातवे ८

३ २उ ३ १ २ ३ १ २र ३ २
२२२ इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्
१ २ ३ १
समूढमस्य पाँसुले ९

इति तृतीया दशतिः ३ एकादशः खण्डः ११

(४)

(१-१०) १, ७, ८ मेधातिथिः कारवः २ वामदेवो गौतमः ३, ५ मेधातिथिः कारवः प्रियमेधश्चाङ्गिरसः ४ विश्वामित्रो गाथिनः ६ दुर्मित्रः कौत्सः ९ विश्वामित्रो

गाथिनोऽभीपाद् उदलो वा १० श्रुतकक्षः आंगिरसः ॥ इन्द्रः ॥ गायत्री ॥

१ २ ३ १ २ ३ २ ३ १ २र
२२३ अतीहि मन्युषाविणँ सुषुवाँसमुपेरय
३ २ ३ २ ३ १ २
अस्य रातौ सुतं पिब १

२ ३ १ २ ३ १ २र ३ १ २
२२४ कदु प्रचेतसे महे वचो देवाय शस्यते
१ २र ३ १ २
तदिध्यस्य वर्धनम् २

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २र
२२५ उक्थं च न शस्यमानं नागो रयिरा चिकेत
१ २ ३ २ ३ १ २
न गायत्रं गीयमानम् ३

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
२२६ इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः
१ २ ३ २ ३ १ २
हरिवान्त्सुतानाँ सखा ४

२ ३ १ २ ३ १ २र ३ १ २
२२७ आ याह्युप नः सुतं वाजेभिर्मा हृणीयथाः
३ १ २ ३ १ २
महाँइव युवजानिः ५

३ १ २ ३ १ २र ३ १ २र ३ १ २ ३ २
२२८ कदा वसो स्तोत्रँहर्यत आ अव श्मशा रुधद्वाः
३ २ ३ २ ३ १ २
दीर्घँसुतं वाताप्याय ६

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
२२९ ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु
२ ३ २ ३ १ २र
तवेदँसख्यमस्तृतम् ७

३ १ २ ३ १ २ ३ १२
२३० वयं घा ते अपि स्मसि स्तोतार इन्द्र गिर्वणः
१ २
त्वं नो जिन्व सोमपाः ८

१ २ ३ १ २र ३ २ ३ १ २
२३१ एन्द्र पृत्सु कासु चिन्नृम्णं तनूषु धेहि नः
१ २ ३ १ २
सत्राजिदुग्र पौँस्यम् ९

३ १ २र ३ २३ १ २र ३ २ ३ २
२३२ एवा ह्यसि वीरयुरेवा शूर उत स्थिरः
३ २ ३ २ ३ १ २
एवा ते राध्यं मनः १०

इति चतुर्थी दशतिः ४ द्वादशः खण्डः १२

इति द्वितीयोऽध्यायः २

इत्यैकसाम्नि समाप्तम्

अथ तृतीयोऽध्यायः

(५)

(१-१०) १, ६, ९ वसिष्ठो मैत्रावरुणिः २ भरद्वाजः बार्हस्पत्यः ३ प्रस्कण्वः काण्वः ४ नोधा गौतमः ५ कलिः प्रागाथः ७ मेधातिथिः काण्वः ८ भर्गः प्रागाथः १० प्रगाथो घौरः काण्वः ॥ इन्द्रः ९ मरुतः ॥ बृहती ॥

३ १ २ ३ १ २ ३ १ २
२३३ अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः
१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः १

१ २र ३ १ २र ३१ २
२३४ त्वामिद्धि हवामहे सातौ वाजस्य कारवः
२ ३१ २ ३ १ २ ३ २३ २उ ३ १ २
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः २

३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ २
२३५ अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ३

१ २ ३ १ २उ३ २ ३ १ २ ३ १ २र
२३६ तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः
३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ४

१ ३ ३ १ २ ३ १ २ ३ १ २ ३ १ २
२३७ तरोभिर्वो विदद्वसुमिन्द्रँसबाध ऊतये
३ १ २र ३ १ २ ३२ ३२उ ३ २ ३ १ २
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ५

३२ ३ १ २ ३ २ ३ १२ ३ २
२३८ तरणिरित्सिषासति वाजं पुरन्ध्या युजा
२ ३ १ २ ३ १ २ ३ २ ३ १ २र ३ १ २
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ६

१ २ ३१ २ ३ २ ३ १ २ ३ १ २
२३९ पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः
३ १ २ ३ १ २ ३ २ १ २ ३ १ २
आपिर्नो बोधि सधमाद्ये वृधे३ऽस्माँअवन्तु ते धियः ७

२उ ३ १२ ३ २उ ३ १ २
२४० त्वँह्येहि चेरवे विदा भगं वसुत्तये
१ २ ३ १ २ ३ २ ३ १ २
उद्वावृषस्व मघवन्गविष्टय उदिन्द्राश्वमिष्टये ८

१ २र ३ २ ३ १ २र ३ १ २
२४१ न हि वश्चरमं च न वसिष्ठः परिमँसते
३ १ २ ३ २ ३ १ २ ३२उ ३ १ २ ३ १ २
अस्माकमद्य मरुतः सुते सचा विश्वे पिबन्तु कामिनः ९

१ २ ३ १ २र ३ १ २ ३ १ २
२४२ मा चिदन्यद्वि शँसत सखायो मा रिषण्यत
२ ३ १ २ ३ १ २ ३ १ २ ३१ २र ३ १ २
इन्द्रमित्स्तोता वृषणँसचा सुते मुहुरुक्था च शँसत १०

इति पञ्चमी दशतिः ५ प्रथमः खण्डः १

इति तृतीय प्रपाठके प्रथमोऽर्धः १

(६)

(१-१०) १ पुरुहन्मा आंगिरसः २, ३ मेधातिथि-मेध्यातिथी काण्वौ ४ विश्वामित्रो गाथिनः ५ गोतमो राहूगणः ६ नृमेधपुरुमेधावांगिरसौ ७, ८, ९ मेधातिथिर्मेध्यातिथिर्वा काण्वः १० देवातिथिः काण्वः

॥ इन्द्रः ॥ बृहती ॥

२ ३१ २र ३ २ ३ १२ ३ १ २
२४३ न किष्टं कर्मणा नशद्यश्चकार सदावृधम्
२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा १

२ ३१ २ ३ १ २ ३ २ ३१ २ ३ १ २
२४४ य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः
१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ता विह्रुतं पुनः २

१ २ ३ २ ३ २ ३ २ ३ १ २र ३ १ २
२४५ आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये
३ २ ३ १२ ३ २ ३ १ २ ३ १ २
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ३

२ ३ १ २ ३ १ २ ३ २ ३ १ २
२४६ आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः
२ ३ २ ३ १ २ ३ २उ ३ २उ ३ १ २ ३ १ २
मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि ४

२ ३ १ २र ३ १ २ ३ १ २
२४७ त्वमङ्ग प्र शँसिषो देवः शविष्ठ मर्त्यम्
२उ ३ १ २ ३ २ ३ १ २ ३ १ २
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ५

१ २ ३ १ २ ३ १ २र ३ १ २
२४८ त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः
२ ३ १ २ ३ २उ ३ २ ३ १ २ ३ १ २
त्वं वृत्राणि हँस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ६

२ ३ २ ३ १ २ ३ १ २ ३क २र ३ २
२४९ इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे
१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इन्द्रँ समीके वनिनो हवामह इन्द्रं धनस्य सातये ७

३ १ २ ३ १ २ ३ १ २र
२५० इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम
३ १ २ ३ १ २ ३ २ ३ १ २र
पावकवर्णाः शुचयो विपश्चितोऽभिस्तोमैरनूषत ८

२ ३ १ २र ३ २३ २ ३
२५१ उदु त्ये मधुमत्तमा गिर स्तोमास ईरते
३ १ २ ३ १ २र ३ २ ३ १ २
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ९

१ २ ३ २ ३ २ ३२उ ३ १ २
२५२ यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम्
३ १ २ ३ २उ ३ १ २ ३ १ २ ३ २उ ३ १ २
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब १०

इति षष्ठी दशतिः ६ द्वितीयः खण्डः २

(७)

(१-१०) १ भर्गः प्रागाथः २, ८ रेभः काश्यपः ३ जमदग्निर्भार्गवः ४, ९ मेधातिथिः काण्वः ५, ६ नृमेधपुरुमेधावांगिरसौ ७ वसिष्ठो मैत्रावरुणिः १० भरद्वाजः बार्हस्पत्यः

॥ इन्द्रः ३ मित्रावरुणादित्याः ॥ बृहती ॥

३ २ १ २ ३ २ ३ १ २ ३ १ २
२५३ शग्ध्यू३षु शचीपत इन्द्र विश्वाभिरूतिभिः
२ ३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि १

१ २ ३ २ ३ १ २३क २र ३ १ २
२५४ या इन्द्र भुज आभरः स्वर्वाँ असुरेभ्यः
३ २३ १ २ ३ २ ३ २ २ १ २
स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः २

२ ३ २ ३ २ ३ १ २३क २र
२५५ प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो
३ २ १ २ ३ २ ३ १ २ ३ १ २र
वरूथ्ये३वरुणे छन्द्यं वचः स्तोत्रँराजसु गायत ३

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
२५६ अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
समीचीनास ऋभवः समस्वरन्रुद्रा गृणन्त पूर्व्यम् ४

२ ३ १ २ ३ १ २र ३ १ २
२५७ प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत

३१ २ ३ २ ३१ २३ ३१२
वृत्रँहनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ५

३१ २र ३ १२ ३१ २
२५८ बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम्
२३ २ ३१ २ ३१ २ ३२ ३ २३ १२
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ६

२ ३ १२ ३ १ २ ३ २ ३२ ३ १ २
२५९ इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा
१ २ ३ १ २ ३ १२ ३ १ २र
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ७

१ २ ३ १ २ ३ १ २ ३ १ २
२६० मा न इन्द्र परा वृणग्भवा नः सधमाद्ये
१ २ ३ २उ ३ २ ३ १ २ ३ १ २
त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परावृणक् ८

३१ २ ३ १ २ ३ २ ३ २ ३ १ २
२६१ वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः
३ १२ ३ १ २ ३ १ २ ३ १२
पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ९

१ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
२६२ यदिन्द्र नाहुषीष्वा ओजो नृम्णं च कृष्टिषु
२ ३ १ २ ३ २ ३ १ २र ३ १ २र ३ १ २
यद्वा पञ्चक्षितीनां द्युम्नमा भर सत्रा विश्वानि पौँस्या १०

इति सप्तमी दशतिः ७ तृतीयः खण्डः ३

(८)

(१-१०) १ मेधातिथिः काण्वः २ रेभः काश्यपः ३ वत्सः ४ भरद्वाजः बार्हस्पत्यः ५ नृमेध आंगिरसः ६ पुरुहन्मा आंगिरसः ७ नृमेध-पुरुमेधावांगिरसौ ८ वसिष्ठो मैत्रावरुणिः ९ मेधातिथि-मेध्यातिथी काण्वौ १० कलिः प्रागाथः ॥ इन्द्रः ॥

बृहती ॥

३ २ ३ १ २र ३ १ २ ३ २
२६३ सत्यमित्था वृषेदसि वृषजूतिर्नोऽविता
२ ३क २र ३१ २ ३ २ ३ १ २ ३ १ २ ३ २
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः १

२ ३ १ २ ३ २ ३ १ २ ३ १ २
२६४ यच्छक्रासि परावति यदर्वावति वृत्रहन्
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ३॥ आ विवासति २

३ १ २ ३१ २र ३ १ २ ३ २ ३ १ २र
२६५ अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम्
२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
इन्द्रं नाम श्रुत्यँ३॥ शाकिनं वचो यथा ३

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
२६६ इन्द्र त्रिधातु शरणं त्रिवरूथँ३॥ स्वस्तये
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ४

१ २ ३ २ ३ १ २र
२६७ श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत
१ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २र
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः ५

२ ३ १ २ ३ १ २र ३ १ २
२६८ न सीमदेव आप तदिषं दीर्घायो मर्त्यः
१ २ ३ ३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २
एतग्वा चिद्या एतशो युयोजत इन्द्रो हरी युयोजते ६

२ ३ १ २ ३ २ ३ १ २ ३ १ २
२६९ आ नो विश्वासु हव्यमिन्द्रँ३॥ समत्सु भूषत
२ ३ १ २ ३ १ २ ३ १ २
उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋचीषम ७

१ २र ३२उ ३ १ २ ३ २
२७० तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम्
३ २ २र ३ १ २ ३ १ २ ३ १ २
सत्रा विश्वस्य परमस्य राजसि न किष्ट्वा गोषु वृण्वते ८

२र ३ १ २ ३ २ ३ २ ३ १ २
२७१ क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः
१ २ ३ १ २ ३ १ २
अलर्षि युध्म खजकृत्पुरन्दर प्र गायत्रा अगासिषुः ९

३ १ २ ३ १ २र ३ २ ३ १ २
२७२ वयमेनमिदा ह्योपीपेमेह वज्रिणम्
१ २ ३ १ २र ३ १ ३ २ ३ १ २ ३ २
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते १०

इति अष्टमी दशतिः ८ चतुर्थः खण्डः ४

(६)

(१-१०) १, ६ पुरुहन्मा आंगिरसः २ भर्गः प्रागाथः ३ इरिम्बिठिः काण्वः ४ जमदग्निर्भार्गवः ५, ७ देवातिथिः काण्वः ८ वसिष्ठो मैत्रावरुणिः ९ भरद्वाजो बार्हस्पत्यः १० मेध्यः काण्वः ॥ इन्द्रः ॥ बृहती ॥

१ २र ३ २उ ३ १ २ ३१ २
२७३ यो राजा चर्षणीनां याता रथेभिरध्रिगुः
१ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ २
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे १

१ २ ३ १ २ ३ १ २ ३ १ २
२७४ यत इन्द्र भयामहे ततो नो अभयं कृधि
१ २ ३२उ ३ १ २ ३ २ ३ २उ ३ १ २र
मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि २

१ २ ३ १ २र ३ १ २
२७५ वास्तोष्पते ध्रुवा स्थूणाँसत्रँ सोम्यानाम्
३ २ ३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
द्रप्सः पुरां भेत्ता शश्वतीनामिन्द्रो मुनीनाँ सखा ३

२ ३ १ २ ३ १ २ ३ १ २
२७६ बण्महाँ असि सूर्य बडादित्य महाँअसि
३१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि ४

३ २ ३ १ २ ३२उ ३ १ २ ३ १ २
२७७ अश्वी रथी सुरूप इद्गोमाँयदिन्द्र ते सखा
३ २ ३ १ २ ३ १ २ ३ १ ३ ३ १ २र
श्वात्रभाजा वयसा सचते सदा चन्द्रैर्याति सभामुप ५

१ २र ३ २ ३ १ २र ३ २
२७८ यद्द्याव इन्द्र ते शतँ शतं भूमीरुत स्युः
१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
न त्वा वज्रिन्त्सहस्रँसूर्या अनु न जातमष्ट रोदसी ६

१ २ ३ २उ ३ २ ३क२र ३ २ ३ १ २
२७९ यदिन्द्र प्रागपागुदग्न्यग्वा हूयसे नृभिः
१ २ ३ १ २र ३ २ ३ २ २ ३ १ २
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ७

१ २र ३ १ २र
२८० कस्तमिन्द्र त्वा वसवा मर्त्यो दधर्षति
३ १ २र ३ १ २ ३ १ ३ १ २र
श्रद्धा हि ते मघवन्पार्ये दिवि वाजी वाजँ सिषासति ८

१ २ ३ २ ३ १ २र ३ १ २
२८१ इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः
२ १ २र ३ २ ३ १२३ १२ ३ २ ३ १ २
हित्वा शिरो जिह्वया रारपच्चरत्त्रिँशत्पदा न्यक्रमीत् ९

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
२८२ इन्द्र नेदीय एदिहि मितमेधाभिरूतिभ्यः
१ २ ३ १ २ ३ १ २ ३ १ २र २र ३ १ २
आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभिः १०

इति नवमी दशतिः ९ इति पञ्चमः खण्डः ५

(१०)

(१-१०) १ नृमेध आंगिरसः २, ३ वसिष्ठो मैत्रावरुणिः ४ भरद्वाजः बार्हस्पत्यः ५ परुच्छेपो दैवोदासिः ६ वामदेवो गौतमः ७ मेध्यातिथिः काण्वः ८ भर्गः प्रागाथः ९, १० मेधातिथिः मेध्यातिथी काण्वौ ॥ इन्द्रः ॥ बृहती ॥

३ २ ३ १ २ ३ १२ ३ २३ १ २
२८३ इत ऊती वो अजरं प्रहेतारमप्रहितम्
३ १ २र३ १ २ ३ १ २ ३ १ २ ३ १ २
आशुं जेतारँ हेतारँ रथीतममतूर्तं तुग्रियावृधम् १

१ २र ३ १ २ ३ २उ ३ १ २र
२८४ मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन्
३ १ ३ ३ १ २ ३ १ २ ३ २ ३ १ २र
आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि २

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
२८५ सुनोत सोमपाव्ने सोममिन्द्राय वज्रिणे

१ २ ३ १ २र ३ २र ३ २ २र ३ १ २र
पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः ३

१ २ ३ १ २र ३ २ ३ १ २ ३ २
२८६ यः सत्राहा विचर्षणिरिन्द्रं तँ हूमहे वयम्
१ २ ३ १ २ ३ १ २ ३ २
सहस्रमन्यो तुविनृम्ण सत्पते भवा समत्सु नो वृधे ४

१ २ ३ २ ३ १ २
२८७ शचीभिर्नः शचीवसू दिवा नक्तं दिशस्यतम्
१ २ ३ १ २र ३ २ ३ २उ ३ २ ३ २ ३ २
मा वाँ रातिरुपदसत्कदाचनास्मद्रातिः कदाचन ५

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
२८८ यदा कदा च मीढुषे स्तोता जरेत मर्त्यः
१ २र ३ १ २ ३ २ ३ २ ३ २३ १ २
आदिद्वन्देत वरुणं विपा गिरा धर्त्तारं विव्रतानाम् ६

३ १ २र ३ २ ३ १ २
२८९ पाहि गा अन्धसो मद इन्द्राय मेध्यातिथे
१ २र ३ २ ३ १ २३ २ ३ १ २ ३ १ २३ १ २
यः सम्मिश्लो हर्योर्यो हिरण्यय इन्द्रो वज्री हिरण्ययः ७

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
२९० उभयँ शृणवच्च न इन्द्रो अर्वागिदं वचः
३ १ २ ३ २ ३ १ २ ३ १ २र ३ १ २
सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत् ८

३ २ ३ २ २ ३ १ २ ३ १ २
२९१ महे च न त्वाद्रिवः परा शुल्काय दीयसे
२ ३ १ २ ३ १ २र ३ २ ३ १ २
न सहस्राय नायुताय वज्रिवो न शताय शतामघ ९

१ २ ३ २ ३२उ ३ १ २
२९२ वस्याँइन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः
३ १ २ ३ १ २ ३ २ ३ १ २
माता च मे छदयथः समा वसो वसुत्वनाय राधसे १०

इति दशमी दशतिः १० षष्ठः खण्डः ६

इति तृतीयप्रपाठके द्वितीयोऽर्धः तृतीयः प्रपाठकश्च समाप्तः

अथ चतुर्थ प्रपाठके प्रथमोऽर्धः

(१)

(१-१०) १ वसिष्ठो मैत्रावरुणिः २, ६, ७ वामदेवो गौतमः ३ मेधातिथि-मेध्यातिथी काण्वौ विश्वामित्र इत्येके ४ नोधा गोतमः ५ मेधातिथिः काण्वः ८ श्रुष्टिगुः काण्वः ९ मेध्यातिथिः काण्वः १० नृमेध आंगिरसः ॥ इन्द्रः ७ बहुः ॥ बृहती ॥

२९३ इम इन्द्राय सुन्विरे सोमासो दध्याशिरः
ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ १

२९४ इम इन्द्र मदाय ते सोमाश्चिकित्र उक्थिनः
मधोः पपान उप नो गिरः शृणु रास्व स्तोत्राय गिर्वणः २

२९५ आ त्वा३द्य सबर्दुघाँहुवे गायत्रवेपसम्
इन्द्रं धेनुँसुदुघामन्यामिषमुरुधारामरङ्कृतम् ३

२९६ न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीडवः
यच्छिक्षसि स्तुवते मावते वसु न किष्टदा मिनाति ते ४

२९७ क ईं वेद सुते सचा पिबन्तं कद्वयो दधे
अयं यः पुरो विभिनत्योजसा मन्दानः शिप्रयन्धसः ५

२९८ यदिन्द्र शासो अव्रतं च्यावया सदसस्परि
अस्माकमँशुं मघवन्पुरुस्पृहं वसव्ये अधि बर्हय ६

२९९ त्वष्टा नो दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः

२१ २र ३१ २ ३१ २ ३२३ १२३ १२
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणं वचः ७

३ २ ३२ ३१२ ३ १ २ ३१२
३०० कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे
२ ३१ २र ३ २ ३ २र ३ १ २ ३ १ २
उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ८

३ १ २र ३ १ २ ३ १ २
३०१ युक्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः
३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि ९

२ ३ १ २र ३ १ २
३०२ त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः
१ २ ३ १ २ ३१ ३ २३ १ २३ १ २
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि १०

इति प्रथमा दशतिः १ सप्तमः खण्डः ७

## (२)

(१-१०) १, २, ७, ८ वसिष्ठो मैत्रावरुणिः ३ अश्विनौ वैवस्वतौ ४ प्रस्कण्वः काण्वः ५ मेधातिथिमेध्यातिथी काण्वौ ६ देवातिथिः काण्वः ९ नृमेध आंगिरसः १० नोधाः गौतमः ॥ इन्द्रः १ उषा, २, ३ अश्विनौ ॥ बृहती ॥

१ २ ३ २ऽ १ २ ३ २ ३ २
३०३ प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी १

३ १ २ ३ १ २ ३ १ २
३०४ इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना
३१ २ ३ १ २ ३ १ २ ३ १ २र
अयं वामह्वेऽवसे शचीवसू विशं विशँ हि गच्छथः २

२३ १ २ ३ १ २ ३ १ २
३०५ कुष्ठः को वामश्विना तपानो देवा मर्त्यः
३ १ २ ३ १ २र ३ २३ २३ २३ १ २
घ्नता वामश्मया क्षपमाणोँशुनेत्थमु आद्वन्यथा ३

३ २ ३ १ २ ३ २उ ३ १ २
३०६ अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु
१ २ ३ १ २ ३ १ २र ३ १ २
तमश्विना पिबतं तिरोअह्नयं धत्तँरत्नानि दाशुषे ४

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
३०७ आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या
१ २ ३ १ २र ३ १ २र ३ २
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं याचिषत् ५

१ २ ३ २ ३ २उ ३ १ २
३०८ अध्वर्यो द्रावया त्वँ सोममिन्द्रः पिपासति
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
उपो नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ६

३ २ ३२उ ३२ ३ २ ३ १ २
३०९ अभीषतस्तदा भरेन्द्र ज्यायः कनीयसः
३ २ ३ १ २ ३ १ २ ३ १२ ३ १ २
पुरूवसुर्हि मघवन्बभूविथ भरेभरे च हव्यः ७

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
३१० यदिन्द्र यावतस्त्वमेतावदहमीशीय
३ २३ १ २ ३ १ २ ३ १ २
स्तोतारमिद्दधिषे रदावसो न पापत्वाय रँसिषम् ८

१ २ ३ १ २ ३ १ २र ३ १ २
३११ त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः
३ १ २ ३ १ २३१२ ३ १ २ ३ २
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ९

१ २र ३ १ २र ३ १ २र ३ १ २
३१२ प्र यो रिरिक्ष ओजसा दिवः सदोभ्यस्परि
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
न त्वा विव्याच रज इन्द्र पार्थिवमति विश्वं ववक्षिथ १०

इति द्वितीया दशतिः २ अष्टमः खण्डः ८

इति बृहती समाप्ताः

(३)

(१-१०) १, २, ६ वसिष्ठो मैत्रावरुणिः ३ गातुरात्रेयः ४ पृथुर्वैन्यः ५ सप्तगुरांगिरसः ७ गौरिवीतिः शाक्त्यः ८ वेनो भार्गवः ९ बृहस्पतिर्नकुलो वा १० सुहोत्रो भारद्वाजः ॥ इन्द्रः ८ वेनः ॥ त्रिष्टुप् ॥

१ २ ३ १ २र ३ २ ३क २र २ १ २ ३ १ २
३१३ असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच
१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा न स्तोममन्धसो मदेषु १

१ २ ३ १ २ ३ १ २र ३ १ २
३१४ योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरुहूत प्र याहि
२ ३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
असो यथा नोऽविता वृधश्चिद्ददो वसूनि ममदश्च सोमैः २

१ २ ३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
३१५ अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः
३ १ २ ३ १ २ ३ २उ ३ २उ ३ २ ३ १ २ ३ २
महान्तमिन्द्र पर्वतं वि यद्वः सृजद्धारा अव यद्दानवान्हन् ३

३ १ २ ३ १ २ ३ १ २ ३ १ २
३१६ सुष्वाणास इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तुविनृम्ण वाजम्
१ २ ३ १ २र ३ २उ ३ १ २ ३ १ २
आ नो भर सुवितं यस्य कोना तना त्मना सह्यामात्वोताः ४

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
३१७ जगृह्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम्
३ २उ ३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
विद्मा हि त्वा गोपतिँ शूर गोनामस्मभ्यं चित्रं वृषणँ रयिं दाः ५

२ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ २ ३ २
३१८ इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः
२ ३ १ २ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ १ २
शूरो नृषाता श्रवसश्च काम आ गोमति व्रजे भजा त्वं नः ६

१ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
३१९ वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः
१ २ ३ १ २ ३ २ ३ १ २र ३ २ऽ २ ३ १ २ ३ २
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्या३स्मान्निधयेव बद्धान् ७

१ २ ३ २र ३ १ २र ३ १ २र ३ १ २
३२० नाके सुपर्णमुप यत्पतन्तँ हृदा वेनन्तो अभ्यचक्षत त्वा

१२ ३ १२ ३२ ३२ ३ १ २ ३१ २३ २
हिरगयपद्मं वरुगस्य दूतं यमस्य योनौ शकुनं भुरगयुम् ८

१ २ ३१ २३२ ३२ ३ १ २३२ ३१ २ ३१ २
३२१ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः
२ ३क २र ३ १ २ ३ २ ३२३ २ ३१ २ ३ १२
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ९

१२ ३१ २ ३२ ३१२ ३१२ ३१२
३२२ अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय
३ १२ ३ २३ १ २ ३ १ २ ३ १ २
विरप्शिने वज्रिणे शन्तमानि वचाँस्यास्मै स्थविराय तक्षुः १०

इति तृतीया दशतिः ३ इति नवमः खगडः ९

(४)

(१-९) १, २, ४ द्युतानो मारुतः ३ बृहदुक्थो वामदेव्यः ५ वामदेवो गोतमः ६, ८ वसिष्ठो मैत्रावरुणिः ७ विश्वामित्रो गाथिनः ९ गोरिवीतिः शाक्त्यः ॥ इन्द्रः ॥

त्रिष्टुप् ॥

१ २ ३ १ २ ३१ २ ३२ ३ २ ३ १ २ ३१ २
३२३ अव द्रप्सो अँशुमतीमतिष्ठदीयानः कृष्णो दशभिः सहस्रैः
२ ३२उ ३ २ ३ १२ ३२३ १ २ ३१ २ ३ २
आवत्तमिन्द्रः शच्या धमन्तमप स्नीहितिं नृमणा अधद्राः १

३१ २ ३ २ ३ १२ ३ १ २ ३ १ २ ३१ २र
३२४ वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः
३१ २ ३ १ २ ३ २ ३ २उ ३ १२
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि २

३ १ २ ३ १ २र ३ १ २र ३ १ २ ३ १ २
३२५ विधुं दद्राणँ समने बहूनाँ युवानँसन्तं पलितो जगार
३ १ २ ३ १ २ ३ २उ ३ २३ १ २र
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ३

२ ३ २ ३२ ३ १२ ३१ २ ३ १२
३२६ त्वँह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र
३ १ २र ३ १ २र ३ २ ३ १ २ ३ १ २
गूढे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः ४

३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
३२७ मेडिं न त्वा वज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभँ स्थिरप्स्नुम्
३२र ३ १२ ३ १ २र ३ १ २३१२
करोष्यर्यस्तरुषीर्दुवस्युरिन्द्र द्युक्षं वृत्रहणं गृणीषे ५

१ २ ३१ २३ १२ ३ १ २ ३ १ २ ३ १ २
३२८ प्र वो महे महे वृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम्
१ २ ३ १ २र ३ २
विशः पूर्वीः प्र चर चर्षणिप्राः ६

३ १ २ ३ १ २३ १ २ २उ ३ १ २ ३ १ २
३२९ शुनँ हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ
३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २३ १ २
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि सञ्जितं धनानि ७

२ ३ १ २ ३ १ २ ३ १ २
३३० उदु ब्रह्माण्यैरत श्रवस्येन्द्रँ समर्ये महया वसिष्ठ
१ २र ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
आ यो विश्वानि श्रवसा ततानोपश्रोता म ईवतो वचाँसि ८

३ १ २र ३ १ २र ३ १ २र ३ १ २र
३३१ चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात्
३ १ २र ३ २उ ३ २ ३ १ २र ३ १ २
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ९

इति चतुर्थी दशतिः ४ दशमः खण्डः १०

## (५)

(१-१०) १ अरिष्टनेमिस्तार्क्ष्यः २ भरद्वाजः ३ विमद ऐन्द्रः, वसुकृद्वा वासुक्रः ४-६, ९ वामदेवो गौतमः ७ विश्वामित्रो गाथिनः ८ रेणुर्वैश्वामित्रः १० गोतमो राहूगणः

॥ इन्द्रः ॥ त्रिष्टुप् ॥

२ ३ २ ३ १ २ ३ १ २ ३ १ २ २ २३ १ २
३३२ त्यमू षु वाजिनं देवजूतँ सहोवानं तरुतारँ रथानाम्
१ २ ३ १ २ २ ३ ३ २३ १ २ ३ १ २
अरिष्टनेमिं पृतनाजमाशुँ स्वस्तये तार्क्ष्यमिहा हुवेम १

३ २३ १ २ ३ २३ २ ३ १ २ ३ २ ३ २३ १ २
३३३ त्रातारमिन्द्रमवितारमिन्द्रँ हवेहवे सुहवँ शूरमिन्द्रम्
३२उ ३ १ २ ३१ २र ३२ ३ २३१ २ ३ १ २
हुवे नु शक्रं पुरुहूतमिन्द्रमिदँ हविर्मघवा वेत्विन्द्रः २

१ २ ३ २ ३ १ २ ३ १ २ ३ २ऽ १ २
३३४ यजामह इन्द्रं वज्रदक्षिणँ हरीणाँ रथ्या३विव्रतानाम्
१ २र ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २र
प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्वि सेनाभिर्भयमानो वि राधसा ३

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३१ २ ३ २ ३ १ २
३३५ सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृशभँ सुवज्रम्
२ ३ २ ३१ २र ३२उ ३ २ २ ३ १ २ ३१ २ ३ १ २
हन्ता यो वृत्रँ सनितोत वाजं दाता मघानि मघवा सुराधाः ४

१ २ ३ १ २ ३ २ ३ २३ १ २ ३ १ २ ३ १ २
३३६ यो नो वनुष्यन्नभिदाति मर्त उगणा वा मन्यमानस्तुरो वा
३ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २
क्षिधी युधा शवसा वा तमिन्द्राभी ष्याम वृषमणस्त्वोताः ५

२ ३१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३१ २ ३ १ २
३३७ यं वृत्रेषु क्षितय स्पर्धमाना यं युक्तेषु तुरयन्तो हवन्ते
१ २र ३ २ ३ १ २र ३ १ २र ३ १ २ ३ १ २र
यँ शूरसातौ यमपामुपज्मन्यं विप्रासो वाजयन्ते स इन्द्रः ६

१ २ ३ १ २र ३ २उ ३ १ २ ३ १ २
३३८ इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतँ सुवीराः
३ २ ३ १ २ ३१ २ ३ १ २ ३ १ २र ३ १ २
वीतँ हव्यान्यध्वरेषु देवा वर्धेथां गीर्भीरिडया मदन्ता ७

१ २ ३ २ ३ १ २ ३१ २र ३ १ २ ३ १ २
३३९ इन्द्राय गिरो अनिशितसर्गा अपः प्रैरयत्सगरस्य बुध्नात्
१ २र ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
यो अक्षेणेव चक्रियौ शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ८

२ ३ १ २ ३ १ २ ३२ ३ १ २ ३ १ २
३४० आ त्वा सखायः सख्या ववृत्युस्तिरः पुरू चिदर्णवां जगम्याः
३ १ २र ३ १ २ ३ १ ३ १ २र ३ १ २र
पितुर्नपातमा दधीत वेधा अस्मिन्क्षये प्रतरां दीद्यानः ९

२ ३ १ २ ३२उ ३ २ ३ १ २ ३ १ २ ३ २
३४१ को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्
३ १ २ ३ १ २ ३ १ २र ३ २ ३ २ ३ १ २
आसन्नेषामप्सुवाहो मयोभून्य एषां भृत्यामृणधत्स जीवात् १०

इति पञ्चमी दशतिः ५ एकादशः खण्डः ११

इति त्रिष्टुप् समाप्ता ॥ इति चतुर्थप्रपाठकस्य प्रथमोऽर्धः १

(६)

(१-१०) १ मधुच्छन्दा वैश्वामित्रः २ जेता माधुच्छन्दसः ३, ६ गोतमो राहूगणः ४ अत्रिर्भौमः ५, ८ तिरश्चीराङ्गिरसः ७ नीपातिथिः काण्वः ९ विश्वामित्रो गाथिनः १० तिरश्चीरांगिरसः शंयुर्बार्हस्पत्यो वा

॥ इन्द्रः ॥ अनुष्टुप् ॥

१ २ ३ १ २र ३ २ ३ १ २
३४२ गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः
३ १ २ ३ २ ३ १ २
ब्रह्माणस्त्वा शतक्रत उद्वँशमिव येमिरे १

२ ३ १ २ ३ १ २ ३ १ २
३४३ इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः
३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
रथीतमँरथीनां वाजानाँसत्पतिं पतिम् २

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
३४४ इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम्
३ १ २ ३क २र ३ १ २ ३ २ ३ १ २
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ३

१ २ ३२उ ३ १ २
३४५ यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः
२ ३ १ २ ३ १ २
राधस्तन्नो विदद्वस उभयाहस्त्या भर ४

३ १ २र ३ २उ ३ १ २ ३ १ २
३४६ श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति
३ १ २ ३ १ २ ३ १ १ ३ १ २
सुवीर्यस्य गोमतो रायस्पूर्धि महाँअसि ५

१ २ ३ १ २ ३ १ २ ३ १ २
३४७ असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि
१ २ ३२उ ३ २ ३ २ ३ १ २
आ त्वा पृणक्त्विन्द्रियँरजः सूर्यो न रश्मिभिः ६

१ २ ३ १ २ ३२३ १ २ ३ २
३४८ एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम्
३ २ ३ २ ३ १ २ ३ १ २ ३१ २
दिवो अमुष्य शासतो दिवं यय दिवावसो ७

२ ३ १ २ ३ २ ३ १ २ ३ १ २
३४९ आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः
३ २ ३ १ २ ३ १ २ ३ २उ ३ १ २
अभि त्वा समनूषत गावो वत्सं न धेनवः ८

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
३५० एतो न्विन्द्रँ स्तवाम शुद्धँ शुद्धेन साम्ना
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
शुद्धैरुक्थैर्वावृध्वाँ सँ शुद्धैराशीर्वान्ममत्तु ९

२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
३५१ यो रयिं वो रयिन्तमो यो द्युम्नैर्द्युम्नवत्तमः
१ २ ३ १ २र ३ १ २ ३ १ २
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः १०

इति षष्ठी दशतिः ६ द्वादशः खण्डः १२

इति तृतीयोऽध्यायः ३

अथ चतुर्थोऽध्यायः

(७)

(१-८) १ भरद्वाजो बार्हस्पत्यः २ वामदेवो गौतमः शाकपूतो वा ३ प्रियमेध आङ्गिरसः ४ प्रगाथः काण्वः ५ श्यावाश्व आत्रेयः ६ शंयुर्बार्हस्पत्यः ७ वामदेवो गौतमः ८ जेता माधुच्छन्दसः ॥ इन्द्रः ५ मरुतः ७ दधिक्रा वा ॥ अनुष्टुभ् ॥

१ २ ३ १ २ ३ १ २ ३ १ २
३५२ प्रत्यस्मै पिपीषते विश्वानि विदुषे भर
३ २ ३ २ ३ १ २ ३ १ २
अरङ्गमाय जग्मयेऽपश्चादध्वने नरः १

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
३५३ आ नो वयो वयःशयं महान्तं गह्वरेष्ठां महान्तं पूर्विनेष्ठाम्
३२उ ३ १ २
उग्रं वचो अपावधीः २

२   ३ २ ३  २ ३१ २  ३  १ २
३५४ आ त्वा रथं यथोतये सुम्नाय वर्तयामसि
३   १ २ ३ २ ३  १ २   ३  १ २
तुविकूर्मिमृतीषहमिन्द्रँ शविष्ठ सत्पतिम्  ३

२ ३  २  ३  १  २  ३१   २र
३५५ स पूर्व्यो महोनां वेनः क्रतुभिरानजे
२  ३  २ ३  १ २   ३  २ ३ २ ३  १ २   ३ २
यस्य द्वारा मनुः पिता देवेषु धिय आनजे  ४

२ ३  १ २  ३ २ ३  १ २  ३ २ ३  २
३५६ यदी वहन्त्याशवो भ्राजमाना रथेष्वा
१ २   ३ २उ  ३ २ ३  १ २
पिबन्तो मदिरं मधु तत्र श्रवाँसि कृण्वते  ५

१ २  ३  १ २   ३ १  २र ३  १ २
३५७ त्यमु वो अप्रहणं गृणीषे शवसस्पतिम्
१ २   ३ २ ३ २३  १ २  ३ १ २
इन्द्रं विश्वासाहं नरँ शचिष्ठं विश्ववेदसम्  ६

३  १ २   ३ १ २र  ३ १ २
३५८ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः
३ २ ३ १ २ ३ २ ३ १ २
सुरभि नो मुखा करत्प्र न आयूँषि तारिषत्  ७

३ २ ३ १ २र ३ १ २र
३५९ पुरां भिन्दुर्युवा कविरमितौजा अजायत
२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३२
इन्द्रो विश्वस्य कर्मणो धर्त्ता वज्री पुरुष्टुतः  ८

इति सप्तमी दशतिः  ७  इति प्रथमः खण्डः  १

(८)

(१-१०) १, ३, ५ प्रियमेध आङ्गिरसः  २, १० वामदेवो गौतमः  ४  मधुच्छन्दा वैश्वामित्रः  ६  भरद्वाजो बार्हस्पत्यः  ७  अत्रिर्भौमः  ८  प्रस्कण्वः काण्वः  ९  त्रित आप्त्यः ॥ इन्द्रः  ८  उषाः  ९  विश्वेदेवाः ॥ अनुष्टुप् ॥

१ २  ३ २ ३ १ २ ३ १ २ ३ १ २
३६० प्रप्र वस्त्रिष्टुभमिषं वन्दद्वीरायेन्दवे

३ १ २ ३ १ २ ३ २३ १ २
धिया वो मेधसातये पुरन्ध्या विवासति १

३ १२ ३ २ ३ २ ३ २ ३ २ ३ १ २
३६१ कश्यपस्य स्वर्विदो यावाहुः सयुजाविति
२ ३ २ ३ १ २ ३ २ ३ १ २र ३ १ २
ययोर्विश्वमपि व्रतं यज्ञं धीरा निचाय्य २

१ २ ३ १ २ ३ १ २ ३ १ २
३६२ अर्चत प्रार्चता नरः प्रियमेधासो अर्चत
१ २ ३ २ ३२उ ३ २ ३क २र
अर्चन्तु पुत्रका उत पुरमिद्धृष्णवर्चत ३

३ १ २र ३ २ ३ १ २ ३ १ २
३६३ उक्थमिन्द्राय शँस्यं वर्धनं पुरुनिःषिधे
३ १ २र ३ १ २ ३१ २ ३ १ २
शक्रो यथा सुतेषु नो रारणत्सख्येषु च ४

३ १ २ ३ २ ३ १ २ ३ १ २
३६४ विश्वानरस्य वस्पतिमनानतस्य शवसः
१ २ ३ २ ३ १ २ ३ १ २
एवैश्च चर्षणीनामूती हुवे रथानाम् ५

२ ३ १ २ ३ १ २र ३ १ २र ३ १ २
३६५ स घा यस्ते दिवो नरो धिया मर्तस्य शमतः
३ १ २र ३ २ ३ २ ३ २उ ३ १ २
ऊती स बृहतो दिवो द्विषो अँहो न तरति ६

३ १ २ ३ १ २ ३ २ ३ १ २
३६६ विभोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो
१ २ ३ १ २
अथा नो विश्वचर्षणे द्युम्नँसुदत्र मँहय ७

१ २ ३ १ २ ३ १ २र
३६७ वयश्चित्ते पतत्रिणो द्विपाच्चतुष्पादर्जुनि
२ ३ १ २ ३ १ २र ३ १ २र ३ १ २
उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ८

३ १ २र ३ २ ३ २ ३ १ २ ३ २ ३ २
३६८ अमी ये देवा स्थन मध्य आ रोचने दिवः
१ २ ३२उ ३ २ ३ २ ३ २ ३ १ २
कद्व ऋतं कदमृतं का प्रत्ना व आहुतिः ९

२ ३ १ २ ३ २ ३ १ २ ३ १२
३६९ ऋचꣳ साम यजामहे याभ्यां कर्माणि कृणवते
१ २र ३ २ ३ १ २
वि ते सदसि राजतो यज्ञं देवेषु वक्षतः १०

इति अष्टमी दशतिः ८ द्वितीयः खण्डः २ इत्यनुष्टुभः ॥

(९)

(१-११) १ रेभः काश्यपः २ सुवेदाः शैलूषिः ३ वामदेवो गौतमः ४, ७, ८ सव्य आङ्गिरसः ५ विश्वामित्रो गाथिनः ६ कृष्ण आङ्गिरसः ९ भरद्वाजो बार्हस्पत्यः १० मेधातिथिः काण्वः ११ कुत्स अङ्गिरसः ॥ इन्द्रः ९ द्यावापृथिवी ॥ जगती १ अति जगती १० महापङ्क्तिः ॥

२ ३ १ २ ३ १ २३ १२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
३७० विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे
२ ३ १२ २ २ ३ १ २ ३ १ २र ३१ २ ३ १ २
क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् १

१ २ ३ १ २ ३ २उ ३ २रउ ३ १ २ ३ २३ २
३७१ श्रत्ते दधामि प्रथमाय मन्यवेऽहन्यद्दस्युं नर्यं विवेरपः
३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ ३ २ ३ १ २
उभे यत्वा रोदसी धावतामनु भ्यसात्ते शुष्मात्पृथिवी चिदद्रिवः २

३ २ ३ २ ३ १ २ ३ १ २ ३ २र ३ १ २र ३ १ २
३७२ समेत विश्वा ओजसा पतिं दिवो य एक इद्भूरतिथिर्जनानाम्
२ ३ १ २र ३ १ २ ३ १ २ ३ १ २र ३ २ ३ २
स पूर्व्यो नूतनमाजिगीषं तं वर्त्तनीरनु वावृत एक इत् ३

३ १ २ ३ २ ३ १ २ ३ २ ३२ ३ १ २
३७३ इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो
२उ ३ १ २ ३ २३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
न हि त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति तद्धर्य नो वचः ४

३ १ २ ३ १ २ ३ २ऽ २ ३ १ २ ३ २३क २र
३७४ चर्षणीधृतं मघवानमुक्थ्या३मिन्द्रं गिरो बृहतीरभ्यनूषत
३ १ २ ३१ २ ३ २ ३१ २ ३ १२ ३ १ २
वावृधानं पुरुहूतꣳ सुवृक्तिभिरमर्त्यं जरमाणं दिवेदिवे ५

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२
३७५ अच्छा व इन्द्रं मतयः स्वर्युवः सध्रीचीर्विश्वा उशतीरनूषत
१ २ ३ १२ ३ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
परि ष्वजन्त जनयो यथा पतिं मर्यं न शुन्ध्युं मघवानमूतये ६

३ २उ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
३७६ अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम्
२ ३ २ ३ २ ३ १२ ३ १२ ३ १ २र ३ १ २र
यस्य द्यावो न विचरन्ति मानुषं भुजे मँहिष्ठमभि विप्रमर्चत ७

२उ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २र
३७७ त्यँसु मेषं महया स्वर्विदँशतं यस्य सुभुवः साकमीरते
२ ३ १ २र ३ २३ २ ३ १ २ ३ १ २ ३ १ २
अत्यं न वाजँ हवनस्यदँ रथमिन्द्रं ववृत्यामवसे सुवृक्तिभिः ८

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
३७८ घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा
१ २ ३ १ २र ३ १ २ ३ १ २ ३ २३ १ २
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ९

३ १ २र ३ १ २ ३ २ ३ १ २
३७९ उभे यदिन्द्र रोदसी आपप्राथोषा इव
३ १ २ ३ १ २ ३ १ २ ३ २
महान्तं त्वा महीनाँ सम्राजं चर्षणीनाम्
३ १ २र ३ १ २र
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् १०

२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३१ २ ३ १ २
३८० प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना
३ २ ३ १ २ ३ १ २ ३१ २ ३ १ २
अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तँ सख्याय हुवेमहि ११

इति नवम दशतिः ९ तृतीयः खण्डः ३

इति जगत्यः

(१०)

(१-१०) १ नारदः काण्वः २, ३ गोषूक्त्यश्वसूक्तिनौ काण्वायनौ ४ पर्वतः काण्वः
५-७, १० विश्वमना वैयश्वः ८ नृमेध आङ्गिरसः ९ गोतमो राहूगणः ॥ इन्द्रः ॥

उष्णिक् ॥

१ २ ३ २ ३ १ २ ३ १ २ ३क २र
३८१ इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम्
३ २ ३ २ ३ १ २ ३ २
विदे वृधस्य दक्षस्य महाँहि षः १

१ २ ३ १ २र ३ १ २ ३ २
३८२ तमु अभि प्र गायत पुरुहूतं पुरुष्टुतम्
१ २ ३ १ २ ३ १ २र
इन्द्रं गीर्भिस्तवीषमा विवासत २

२ ३ १ २ ३ १ २ ३ १ २ ३ २
३८३ तं ते मदं गृणीमसि वृषणं पृक्षु सासहिम्
३ १ २ ३ १ २
उ लोककृत्नुमद्रिवो हरिश्रियम् ३

१ २र ३ १ २ ३ १ २ ३ २ ३ २
३८४ यत्सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये
१ २ ३ २ ३ १ २ ३ १ २र
यद्वा मरुत्सु मन्दसे समिन्दुभिः ४

२ ३ १ २ ३ १ २ ३ १ ३ ३ १ २
३८५ एदु मधोर्मदिन्तरँ सिञ्चाध्वर्यो अन्धसः
३ २उ ३१ २र ३ १ २
एवा हि वीरस्तवते सदावृधः ५

२ ३ १ २ ३ १ २ ३ १ २र
३८६ एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु
१ २र ३ २
प्र राधाँसि चोदयते महित्वना ६

२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १२
३८७ एतो न्विन्द्रँ स्तवाम सखायः स्तोम्यं नरम्
३ १ २र ३ २उ ३ २
कृष्टीर्यो विश्वा अभ्यस्त्येक इत् ७

१ २ ३ १ २ ३ १ २ ३ २ ३ २
३८८ इन्द्राय साम गायत विप्राय बृहते बृहत्
३ १ २ ३ १ २ ३ १ २
ब्रह्मकृते विपश्चिते पनस्यवे ८

२उ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
३८९ य एक इद्विदयते वसु मर्ताय दाशुषे

१ २ ३ १ २ ३ १ २ ३ २
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ९

१ २३ १ २ ३ १ २र ३ १ २
३९० सखाय आ शिषामहे ब्रह्मेन्द्राय वज्रिणे
३ २ ३ २ ३ १ २ ३ १ २
स्तुष ऊ षु वो नृतमाय धृष्णवे १०

इति दशमी दशतिः १० चतुर्थः खण्डः ४

इति चतुर्थप्रपाठके द्वितीयोऽर्धः चतुर्थः प्रपाठकश्च समाप्तः

अथ पञ्चमः प्रपाठकः

(१)

(१-८) १ प्रगाथो घौरः काण्वः २ भरद्वाजो बार्हस्पत्यः ३ नृमेध आङ्गिरसः ४ पर्वतः काण्वः ५, ७ इरिम्बिठिः काण्वः ६ विश्वमना वैयश्वः ८ वसिष्ठो मैत्रावरुणिः ॥ इन्द्रः ५, ७ आदित्याः ॥ उष्णिक् ८ विराडुष्णिक् ॥

३ १ २र ३ १ २ ३ २ ३ १ २
३९१ गृणे तदिन्द्र ते शव उपमां देवतातये
१ २र ३ १ २र
यद्ध॑ँसि वृत्रमोजसा शचीपते १

२ ३ १ २र३ २३ १ २ ३ १ २
३९२ यस्य त्यच्छम्बरं मदे दिवोदासाय रन्धयन्
३ १ २र ३ १ २र
अयँस सोम इन्द्र ते सुतः पिब २

१ २ ३ १ २
३९३ एन्द्र नो गधि प्रिय सत्राजिदगोह्य
३२उ ३ १ २ ३ १ २र ३ २
गिरिर्न विश्वतः पृथुः पतिर्दिवः ३

१ २ ३ १ २ ३ १ २ ३ १ २
३९४ य इन्द्र सोमपातमो मदः शविष्ठ चेतति
२ ३ २ ३ २र ऽ २ ३ १ २
येना हँसि न्या३त्रिणं तमीमहे ४

३ १ २र ३ २उ ३ १ २ ३ १ २ ३ १ २
३९५ तुचे तुनाय तत्सु नो द्राघीय आयुर्जीवसे

१ २ ३ १२
आदित्यासः समहसः कृणोतन ५

२ ३ १ २र ३ १ २ ३ १ २
३९६ वेत्था हि निर्ऋृतीनां वज्रहस्त परिवृजम्
१ २ ३ १ २ ३ १ २
अहरहः शुन्ध्युः परिपदामिव ६

१ २र ३ २ ३ २ ३ १ २ ३ २
३९७ अपामीवामप स्त्रिधमप सेधत दुर्मतिम्
१ २ ३ १ २ ३ १ २
आदित्यासो युयोतना नो अँहसः ७

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
३९८ पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः
३ २ ३ २ ३ १ २ ३ १ २
सोतुर्बाहुभ्याँ सुयतो नार्वा ८

इति प्रथमा दशतिः १ पञ्चमः खण्डः ५ इत्युष्णिहः

(२)

(१-१०) सौभरिः काण्वः ७, ८ नृमेध आंगिरसः ॥ इन्द्रः ३, ६ मरुतः ॥ ककुप् ॥

३ २ ३ १ २र ३ १ २ ३ १ २
३९९ अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि
३ १ २ ३ १ २
युधेदापित्वमिच्छसे १

१ २ ३ १ २ ३ १ २र ३ २ १ २
४०० यो न इदमिदं पुरा प्र वस्य आनिनाय तमु व स्तुषे
१ २ ३ १ २ ३ १ २
सखाय इन्द्रमूतये २

१ २ ३ १ २ ३ १ २ ३ १ २
४०१ आ गन्ता मा रिषण्यत प्रस्थावानो माप स्थात समन्यवः
३ १ २
दृढा चिद्यमयिष्णवः ३

१ २ ३२उ ३ १ २ ३ १ २ ३ १ २
४०२ आ याह्ययमिन्दवेऽश्वपते गोपत उर्वरापते

१ २
सोमँ सोमपते पिब ४

१ २ ३ २ ३१ २र ३ १ २
४०३ त्वया ह स्विद्युजा वयं प्रति श्वसन्तं वृषभ ब्रुवीमहि
३ १ २र ३ १ २
सँस्थे जनस्य गोमतः ५

१ २ ३क २र ३ २ ३ १ २
४०४ गावश्चिद्धा समन्यवः सजात्येन मरुतः सबन्धवः
३ १ २ ३ १ २ ३ २
रिहते ककुभो मिथः ६

१ २ ३ १ २३ १ २ ३ १ २
४०५ त्वं न इन्द्रा भर ओजो नृम्णँ शतक्रतो विचर्षणे
२ ३१ २ ३ १ २
आ वीरं पृतनासहम् ७

२ ३क २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
४०६ अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे
३ २ ३ १ २ ३१ २
उदेव ग्मन्त उदभिः ८

१ २ ३ २ ३ २ ३ १ २३ १ २ ३२ ३ १ २
४०७ सीदन्तस्ते वयो यथा गोश्रीते मधौ मदिरे विवक्षणे
३ १ २र
अभि त्वामिन्द्र नोनुमः ९

३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
४०८ वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः
१ २ ३१ २
वज्रिञ्चित्रँ हवामहे १०

इति द्वितीया दशतिः २ षष्ठः खण्डः ६ इति ककुभः

(३)

(१-१०) १-८ गोतमो राहूगणः ९ त्रितः आप्त्यः १० अवस्युरात्रेयः ॥ इन्द्रः ९ विश्वेदेवाः १० आश्विनौ ॥ पंक्तिः ॥

३ २ ३ १ २ ३ २ ३ १ २ ३क२र
४०९ स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः

१ २र ३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३१ २ ३ १ २
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् १

३ २उ ३ २उ ३ १ २ ३ २३ १ २
४१० इत्था हि सोम इन्मदो ब्रह्म चकार वर्धनम्
१ २ ३ १ २ ३ १ २र ३ २ ३ २ ३ १ २ ३ १ २
शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यम् २

२ ३ १ २ ३ १ २ ३ १ २र
४११ इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः
२र ३ २ ३ २ ३ १ २र ३ १ २र ३ १ २
तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ३

२ ३ २ ३ १ ३ १ २ ३क२र
४१२ इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यम्
२र ३ २ ३ १ २ ३२उ ३ २ ३१ २र ३२ ३ १ २ ३ १ २
यद्ध त्यं मायिनं मृगं तव त्यन्माययावधीरर्चन्ननु स्वराज्यम् ४

२ ३ १ २ ३ २उ ३ २ ३ १ २
४१३ प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यँसते
१ २ ३ २उ ३ २ ३ १ २ ३१ २र ३ २ ३१ २ ३ १ २
इन्द्र नृम्णँहि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ५

२ ३ १२ ३ १ २ ३ १ २ ३ १ २
४१४ यदुदीरत आजयो धृष्णवे धीयते धनम्
३ १ २३ २ ३ २ ३ २उ ३ १ २र ३ १ २ ३ १ २
युङ्क्ष्वा मदच्युता हरी कँहनः कं वसौ दधोऽस्माँइन्द्र वसौ दधः ६

२ ३१ २ ३ १ २ ३ १ २
४१५ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत
१ २ ३ १ २ ३ २ ३ १ २ ३ २उ ३क २र ३ १ २
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ७

२ ३ १ २ ३ २उ ३ १ २ ३ १ २
४१६ उपो षु शृणुही गिरो मघवन्मातथा इव
३ १ २ ३ १ २ ३ २३ २ ३ १ २ ३ २उ ३क २र ३ १ २
कदा नः सूनृतावतः कर इदर्थयास इद्योजा न्विन्द्र ते हरी ८

३ १ २ ३ २ ऽ १ २र ३ १ २ ३ २
४१७ चन्द्रमा अप्स्वां३न्तरा सुपर्णो धावते दिवि
१ २ ३१ २ ३ १ २ ३ १ २
न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ९

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
४१८ प्रति प्रियतमँ रथं वृषणं वसुवाहनम्
३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
स्तोता वामश्विनावृषि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुतँ हवम् १०

इति तृतीया दशतिः ३ सप्तमः खण्डः ७

(४)

(१-८) १, ७ वसुश्रुत आत्रेयः २, ४ विमद ऐन्द्रः ३ सत्यश्रवा आत्रेयः ५, ६ गोतमो राहूगणः ८ अंहोमुग्वामदेव्यः ॥ अग्निः ३ उषाः ४ सोमः ५, ६ इन्द्रः ८ विश्वेदेवाः ॥ पंक्तिः ८ बृहती ॥

१ २ ३ १ २ ३ १२
४१९ आ ते अग्न इधीमहि द्युमन्तं देवाजरम्
२ ३ २ ३ १ २ ३ २ ३१ २ ३ १ २र ३२ ३ १ २
युद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषँ स्तोतृभ्य आ भर १

१ २र ३ १ २
४२० आग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे
३१ २ ३ १ २ ३ २ ३ १२ ३१२ ३ १ २ ३ १ २
शीरं पावकशोचिषं वि वो मदे यज्ञेषु स्तीर्णबर्हिषं विवक्षसे २

३१ २ ३ १ २ ३ १ २ ३२ ३ १ २
४२१ महे नो अद्य बोधयोषो राये दिवित्मती
१ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ३

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
४२२ भद्रं नो अपि वातय मनो दक्षमुत क्रतुम्
१ २ ३ १ २र ३ २ ३ २३ २ ३ २ ३ १ २र ३ १ २
अथा ते सख्ये अन्धसो वि वो मदे रणा गावो न यवसे विवक्षसे ४

१ २ ३ १ २ ३ २ ३ १ २र ३ १ २
४२३ क्रत्वा महाँ अनुष्वधं भीम आ वावृते शवः
३ २ ३ १ २ ३ २ ३ २ ३ १ २र ३ १ २ ३ १ २ ३ २
श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवां दधे हस्तयोर्वज्रमायसम् ५

२ ३ १ २र ३ २ ३ १ २ ३ १ २
४२४ स घा तं वृषणँ रथमधि तिष्ठाति गोविदम्

१ २र ३ २ ३ १ २ ३ १ २ ३ २ ३क २र ३ १ २
यः पात्रँ हारियोजनं पूर्णमिन्द्राचिकेतति योजा न्विन्द्र ते हरी ६

३ १ २र ३ २उ ३२ ३ १ २र ३ १ २
४२५ अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः
२ ३ १ २ ३ २उ ३ १ ३ ३ २ ३ १ २ ३ २ ३ १ २
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषँ स्तोतृभ्य आ भर ७

२उ ३ १ २ ३ १ २र ३ १ २
४२६ न तमँहो न दुरितं देवासो अष्ट मर्त्यम्
३ १ २ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ २ ३ १ २
सजोषसो यमर्यमा मित्रो नयति वरुणो अति द्विषः ८

इति चतुर्थी दशतिः ४ अष्टमः खण्डः ८

इति पंक्त्यः

(५)

(१-१०) ऋण-त्रसदस्यू ७ वसिष्ठो मैत्रावरुणिः ८ वामदेवो गौतमः ॥ पवमानः सोमः ७ मरुतः ८ अग्निः ९ वाजिनः ॥ द्विपदा विराट् ८ पदपंक्तिः ९ पुरउष्णिक् २, ६ त्रिपदा अनुष्टुप्पिपीलिकामध्या ॥

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
४२७ परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय १

२ ३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
४२८ पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः
३ २ ३१ २ ३ १ २
द्विषस्तरध्या ऋणया न ईरसे २

१ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३ १ २र
४२९ पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ३

१ २ ३२उ ३ २ ३ २ ३ २ ३ १ २र
४३० पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ४

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
४३१ इन्दुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ५

२ ३ १ २ ३१ २ ३ १ २ ३१ २ ३ १ २
४३२ अनु हि त्वा सुतँ सोम मदामसि महे समर्यराज्ये
१ २ ३ १ २ ३ १ २
वाजाँ अभि पवमान प्र गाहसे ६

२ ३क २र ३ २३ १ २ ३ २ ३ २ ३ २ ३ १ २
४३३ क ईं व्यक्ता नरः सनीडा रुद्रस्य मर्या अथा स्वश्वाः ७

२ ३ २ ३ २ ३ २उ ३ २ ३ २ ३१ २ ३ १ २
४३४ अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रँ हृदिस्पृशम्
३ १ २ ३ १ ३
ऋध्यामा त ओहैः ८

३ १ २ ३ १ २र ३ १ २ ३ १ २ ३ २ ३ २
४३५ आविर्मर्या आ वाजं वाजिनो अग्मं देवस्य सवितुः सवम्
३ १ २
स्वर्गाँ अर्वन्तो जयत ९

१ २ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ २
४३६ पवस्व सोम द्युम्नी सुधारो महाँ अवीनामनुपूर्व्यः १०

इति पञ्चमी दशतिः ५ इति नवमः खण्डः ९

इति पंचमप्रपाठकस्य प्रथमोऽर्धः १

(६)

(१-१०) त्रसदस्युः ७ संवर्त आंगिरसः ॥ इन्द्रः ६ विश्वेदेवाः ७ उषाः ॥ द्विपदा विराट् ॥

१ २ ३ १ २ ३ १ २३ २ ३ १ २ ३ १ २
४३७ विश्वतोदावन्विश्वतो न आ भर यं त्वा शविष्ठमीमहे १

३ २ ३ २उ ३ २ ३ २ ३ १ २ ३ २ ३ २
४३८ एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे २

३ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ २ ३ १ २
४३९ ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ३

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
४४० अनवस्ते रथमश्वाय तक्षुस्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ४

२ ३२ ३१ २ ३ २ ३ १ २र २ १ २ ३ १ २ ३ २
४४१ शं पदं मघँ रयीषिणो न काममव्रतो हिनोति न स्पृशद्रयिम् ५

२ ३ २३ १ २ ३ १ २ ३ १ २ ३ १ २३१ २
४४२ सदा गावः शुचयो विश्वधायसः सदा देवा अरेपसः ६

१ २ ३ १ २ ३ १ २र ३ १ २र
४४३ आ याहि वनसा सह गावः सचन्त वर्तनिं यदूधभिः ७

१ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
४४४ उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं धीमहे त इन्द्र ८

१ २ ३ २ ३ १ २ ३ १ २र ३ २उ ३ १ २र
४४५ अर्चन्त्यर्कं मरुतः स्वर्का आ स्तोभति श्रुतो युवा स इन्द्रः ९

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
४४६ प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते १०

इति षष्ठी दशतिः ६ दशमः खण्डः १०

(७)

(१-१०) १ पृषध्रः काण्वः २, ३, ४ बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्च क्रमेण गोपायना लौपायना वा ५ संवर्त आंगिरसः ६ भुवन आप्त्यः, साधनो वा भौवनः ७ कवष ऐलूषः ८ भरद्वाजो बार्हस्पत्यः ९ आत्रेयः १० वसिष्ठो मैत्रावरुणिः ॥ अग्निः ५ उषाः ६, ७, ९ विश्वेदेवाः ३, ४, ८, १० इन्द्रः ॥ द्विपदा विराट् १० एकपदा ॥

१ २ ३ १ २र ३ २उ ३ १ २
४४७ अचेत्यग्निश्चिकितिर्हव्यवाड्न सुमद्रथः १

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३क २र
४४८ अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः २

२ ३ २ ३ २ ३ २३ २ ३ १ २ ३ १ २
४४९ भगो न चित्रो अग्निर्महोनां दधाति रत्नम् ३

१ २ ३ १ २ ३ २ ३ १ २र ३ २ ३ २
४५० विश्वस्य प्र स्तोभ पुरो वा सन्यदि वेह नूनम् ४

३ २उ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
४५१ उषा अप स्वसुष्टमः सं वर्तयति वर्तनिँ सुजातता ५

३ २उ ३ १ २ ३ १ २ ३ १ २ ३ २
४५२ इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ६

२ ३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
४५३ वि स्रुतयो यथा पथा इन्द्र त्वद्यन्तु रातयः ७

३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
४५४ अया वाजं देवहितँ सनेम मदेम शतहिमाः सुवीराः ८

३ २ ३ १ २र ३ २ ३ १ २ ३ १ २ ३ १ २
४५५ ऊर्जा मित्रो वरुणः पिन्वतेडाः पीवरीमिषं कृणुही न इन्द्र ९

२ ३ १ २
४५६ इन्द्रो विश्वस्य राजति १०

इति सप्तमी दशतिः ७ एकादशः खण्डः ११

(८)

(१-१०) १, १० गृत्समदः शौनकः २ गौरांगिरसः ३, ५, ९ परुच्छेपो दैवोदासिः ४ रेभः काश्यपः ६ एवयामरुदात्रेयः ७ अनानतः पारुच्छेपिः ८ नकुलः ॥ १, ३, ४, १० इन्द्रः २ सूर्यः विश्वेदेवाः ६ मरुतः ७ पवमानः सोमः ८ सविता ९ अग्निः ॥

१, १० अष्टिः ३, ५, ७-९ अत्यष्टिः २, ४, ६ अतिजगती

१ २ ३ १ २र ३ २ ३ १ २र ३ १ २ ३ १
४५७ त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सोममपिबद्विष्णुना सुतं
२ ३ २
यथावशम् ।
१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २र ३ २ ३ २ ३ १ २र
स ईं ममाद महि कर्म कर्तवे महामुरुँ सैनँ सश्चद्देवो देवँ सत्य इन्दुः
३ १ २र
सत्यमिन्द्रम् १

३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २उ ३ १ २
४५८ अयँ सहस्रमानवो दृशः कवीनां मतिर्ज्योतिर्विधर्म
३ २ ३ १ २३२३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
ब्रध्नः समीचीरुषसः समैरयदरेपसः सचेतसः स्वसरे मन्युमन्तश्चिता गोः २

१ २ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ १ २ ३२ ३ १ २ ३ १ २
४५९ एन्द्र याह्युप नः परावतो नायमच्छा विदथानीव सत्पतिरस्ता राजेव सत्पतिः ।
१ २ ३ १ २ ३२उ ३ २ ३ २ ३ २३ १ २ ३ १ २ ३
हवामहे त्वा प्रयस्वन्तः सुतेष्वा पुत्रासो न पितरं वाजसातये मँहिष्ठं
१ २
वाजसातये ३

१ २र ३ १ २ ३ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २
४६० तमिन्द्रं जोहवीमि मघवानमुग्रँ सत्रा दधानमप्रतिष्कुतँ श्रवाँसि भूरिः ।
१ २ ३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
मँहिष्ठो गीर्भिरा च यज्ञियो ववर्त राये नो विश्वा सुपथा कृणोतु वज्री ४

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १
४६१ अस्तु श्रौषट्पुरो अग्निं धिया दध आ नु त्यच्छर्धो दिव्यं वृणीमह इन्द्रवायू
२
वृणीमहे ।
१ २ ३ २ ३ २ २ ३ १ २ ३ २ ३ १ २
यद्ध क्राणा विवस्वते नाभा सन्दाय नव्यसे ।
२ ३ २ ३ १ २र ३ १ २ ३ २उ ३ २ ३ १ २
अध प्र नूनमुप यन्ति धीतयो देवाँअच्छा न धीतयः ५

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
४६२ प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवयामरुत् ।
१ २र ३ १ २र ३ १ २ ३ १ ३ १ २ ३ १ २ ३ १ २
प्र शर्धाय प्र यज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ६

३ २ ३ १ २र ३ २उ ३ १ २ ३ १ २ ३ २ ३ २
४६३ अया रुचा हरिणया पुनानो विश्वा द्वेषाँसि तरति सयुग्वभिः सूरो न
३ १ २
सयुग्वभिः ।
१ २ ३ १ २ ३ १ २ ३ १ २र
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः ।
२ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ७

३ २उ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २
४६४ अभि त्यं देवँ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवँ रत्नधामभि प्रियं

३ २
मतिम्
३ २उ ३ २ ३ १ २र ३ १ २ ३ १२ ३ १ २ ३ १
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा
२
स्वः ८

३ १ २र ३ १ २ ३ १ २ ३१ २र ३ १ २ ३ २ ३ २
४६५ अग्निँ होतारं मन्ये दास्वन्तं वसोः सूनुँ सहसो जातवेदसं विप्रं न
३ १ २
जातवेदसम् ।
२ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ९

२ ३ १२र ३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ २
४६६ तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
यो देवस्य शवसा प्रारिणा असु रिणन्नपः ।
२ ३ १ २ ३ १ २ ३ १ २ ३१ २र ३ १ २ ३१ २र
भुवो विश्वमभ्यदेवमोजसा विदेदूर्जँ शतक्रतुर्विदेदिषम् १०

इति अष्टमी दशतिः ८ द्वादशः खण्डः १२

इत्यैन्द्रं पर्व काण्डं वा समाप्तम् ॥

इति चतुर्थोऽध्यायः ४

अथ पावमानं काण्डम्

अथ पञ्चमोऽध्यायः

(६)

(१-१०) १, ४ अमहीयुराङ्गिरसः २ मधुच्छन्दा वैश्वामित्रः ३ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा ५ त्रित आप्त्यः ६ कश्यपोः मारीचः ७ जमदग्निर्भार्गवः ८ दृढच्युत आगस्त्यः ९, १० असितः काश्यपो देवलो वा ॥

पवमानः सोमः ॥ गायत्री ॥

३ १ २ ३१ २र ३ १ २र
४६७ उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे
३२उ ३ २ ३ १ २
उग्रँशर्म महि श्रवः १

१ २ ३ १ २ ३ १ २ ३ १२
४६८ स्वादिष्ठया मदिष्ठया पवस्व सोम धारया
१ २३ १२ ३२
इन्द्राय पातवे सुतः २

१ २ ३ १२ ३१ २ ३१
४६९ वृषा पवस्व धारया मरुत्वते च मत्सरः
२ ३ १ २३ १ २
विश्वा दधान ओजसा ३

२ ३ २ ३ १२ ३ १ २ ३ १ २
४७० यस्ते मदो वरेण्यस्तेना पवस्वान्धसा
३ १ २ ३ २
देवावीरघशꣳसहा ४

३ २उ ३ १ २ ३ १ २ ३ १ २
४७१ तिस्रो वाच उदीरते गावो मिमन्ति धेनवः
१ २ ३ १ २
हरिरेति कनिक्रदत् ५

१ २ ३१ २३ १ २ ३ १ २
४७२ इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः
३ २ ३ १ २ ३ १ २
अर्कस्य योनिमासदम् ६

१ २ ३ १ २र ३ १ २र ३ २
४७३ असाव्यꣳशुर्मदायाप्सु दक्षो गिरिष्ठाः
३ २उ ३ १ २
श्येनो न योनिमासदत् ७

१ २ ३ १ २ ३१ २ ३ १ २
४७४ पवस्व दक्षसाधनो देवेभ्यः पीतये हरे
३१ २ ३ २ ३ १ २
मरुद्भ्यो वायवे मदः ८

१ २ ३ १ २ ३ २ ३ २३ १ २
४७५ परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत्
१ २ ३ १ २
मदेषु सर्वधा असि ९

१ २ ३ २ ३ २ ३ १ २र ३क २र ३ २
४७६ परि प्रिया दिवः कविर्वयांँसि नप्त्योर्हितः
३ १ २ ३ १ २
स्वानैर्याति कविक्रतुः १०

इति नवमी दशतिः ९ प्रथमः खण्डः १

(१०)

(१-१०) १ श्यावाश्व आत्रेयः २ त्रित आप्त्यः ३, ८ अमहीयुराङ्गिरसः ४ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा ५, ६ कश्यपो मारीचः ७ निध्रुविः काश्यपः ९, १० असितः काश्यपो देवलो वा ॥ पवमानः सोमः ॥ गायत्री ॥

१ २र ३ २३ १ २ ३ १ २
४७७ प्र सोमासो मदच्युतः श्रवसे नो मघोनाम्
३ २ ३ १ २
सुता विदथे अक्रमुः १

१ २र ३ २ ३ १ २ ३ १ २
४७८ प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः
१ २ ३ १ २
वनानि महिषा इव २

१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
४७९ पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने
२ ३ २३ १ २
विश्वा अप द्विषो जहि ३

२ ३ १ २ ३ १ २ ३ १ २
४८० वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे
१ २ ३ १ २
पवमान स्वर्दृशम् ४

१ २ ३ १ २ ३ १ २ ३ २ ३ २
४८१ इन्दुः पविष्ट चेतनः प्रियः कवीनां मतिः
३ १ २र ३ १ २
सृजदश्वंँरथीरिव ५

१ २ ३ २ ३ १ २ ३ १ २र ३ २
४८२ असृक्षत प्र वाजिनो गव्या सोमासो अश्वया
३ १ २ ३ १ २र
शुक्रासो वीरयाशवः ६

१ २ ३ १ २ ३ १ २र ३ १ २
४८३ पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः
३ १ २र ३ १ २
वायुमा रोह धर्मणा ७

१ २ ३ २ ३ १ २र ३ २
४८४ पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम्
१ २ ३२ ३ २
ज्योतिर्वैश्वानरं बृहत् ८

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
४८५ परि स्वानास इन्दवो मदाय बर्हणा गिरा
१ २ ३ १२
मधो अर्षन्ति धारया ९

२ ३ १ २ ३ १ २र ३ १ २र ३ २
४८६ परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः
३ १ २र ३ १ २
कारुं बिभ्रत्पुरुस्पृहम् १०

इति दशमी दशतिः १० द्वितीयः खण्डः २

इति पञ्चमप्रपाठकस्य द्वितीयोऽर्धः पञ्चमः प्रपाठकश्च समाप्तः ५

अथ षष्ठप्रपाठकस्य प्रथमोऽर्धः

(१)

(१-१०) १, ८, ९ अमहीयुरांगिरसः २ बृहन्मतिराङ्गिरसः ३ जमदग्निर्भार्गवः ४ प्रभूवसुरांगिरसः ५ मेध्यातिथिः काण्वः ६, ७ निध्रुविः काश्यपः १० उचथ्य आंगिरसः ॥ पवमानः सोमः ॥ गायत्री ॥

२ ३ २ ३ २ ३ २३ १ २ ३ १ २र
४८७ उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम्
१ २ ३ १ २
इन्दुं देवा अयासिषुः १

३ १ २ ३ २उ ३ २ ३ १ २
४८८ पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः
३ २ ३ १२ ३ १ २
शुम्भन्ति विप्रं धीतिभिः २

३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २र
४८९ आविशन्कलशꣳ सुतो विश्वा अर्षन्नभि श्रियः
२ ३ १ २
इन्दुरिन्द्राय धीयते ३

१ २ ३ २ ३ १ २ ३ १ २ ३क २र ३ २
४९० असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः
१ २ ३ १ २
कार्ष्मन्वाजी न्यक्रमीत् ४

२उ ३ १ २र ३ २ ३ २ ३ १ २
४९१ प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः
१ २ ३ २उ ३ १ २
घ्नन्तः कृष्णामप त्वचम् ५

३ १ २ ३ १ २ ३ १ २ ३ २
४९२ अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः
३ १ २र ३ १ २
नुदस्वादेवयुं जनम् ६

३ १ २ ३ १२ ३ २ ३ २ ३ १ २
४९३ अया पवस्व धारया यया सूर्यमरोचयः
३ १ २र ३ २
हिन्वानो मानुषीरपः ७

१ २ ३ २उ ३ १ २ ३ २ ३ १ २
४९४ स पवस्व य आविथेन्द्रं वृत्राय हन्तवे
३ १ २ ३ २३ २
वव्रिवाꣳसं महीरपः ८

३ २ ३ १ २र ३ १ २ ३ २३ २
४९५ अया वीती परि स्रव यस्त इन्दो मदेष्वा
३ १२ ३ १ २र
अवाहन्नवतीर्नव ९

१ २ ३ १ २र ३ २उ ३ १ २ ३ १ ३
४९६ परि द्युक्षꣳ सनद्रयिं भरद्वाजं नो अन्धसा
३ १ २ ३ २३ २
स्वानो अर्ष पवित्र आ १०

इति प्रथमा दशतिः १ तृतीयः खण्डः ३

(२)

(१-१४) १ मेधातिथिः काण्वः २, ७ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा ३ उचथ्य आङ्गिरसः ४ अवत्सारः काश्यपः ५ निध्रुविः काश्यपः ६, १० असितः काश्यपो देवलो वा ८, ९ कश्यपो मारीचः ११ कविर्भार्गवः १२ जमदग्निर्भार्गवः १३ अयास्य आंगिरसः १४ अमहीयुरांगिरसः ॥ पवमानः सोमः ॥ गायत्री ॥

४९७ अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः
सँ सूर्येण दिद्युते १

४९८ आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे
पान्तमा पुरुस्पृहम् २

४९९ अध्वर्यो अद्रिभिः सुतँ सोमं पवित्र आ नय
पुनाहीन्द्राय पातवे ३

५०० तरत्स मन्दी धावति धारा सुतस्यान्धसः
तरत्स मन्दी धावति ४

५०१ आ पवस्व सहस्रिणँ रयिँ सोम सुवीर्यम्
अस्मे श्रवाँसि धारय ५

५०२ अनु प्रत्नास आयवः पदं नवीयो अक्रमुः
रुचे जनन्त सूर्यम् ६

५०३ अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत्

२३ २३ २३ २
सीदन्योनौ वनेष्वा ७

१ २ ३ १ २ ३ १ २ ३ १२
५०४ वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः
१ ३ १ २
वृषा धर्माणि दध्रिषे ८

३१ २ ३ १२ ३ १ २ ३ १ २
५०५ इषे पवस्व धारया मृज्यमानो मनीषिभिः
१ २ ३ १ २र
इन्दो रुचाभि गा इहि ९

३ १ २ ३ १२ ३ १ २ ३ २
५०६ मन्द्रया सोम धारया वृषा पवस्व देवयुः
२ ३ १२ ३ २
अव्यो वारेभिरस्मयुः १०

३ १ २ ३ १ २ ३ २उ ३क २र
५०७ अया सोम सुकृत्यया महान्त्सन्नभ्यवर्धथाः
३ १ २र
मन्दान इद्वृषायसे ११

३१ २र ३१ २र ३ १ २
५०८ अयं विचर्षणिर्हितः पवमानः स चेतति
३ १ २र ३ २
हिन्वान आप्यं बृहत् १२

१ २ ३१ २र ३ १ २र
५०९ प्र न इन्दो महे तु न ऊर्मिं न बिभ्रदर्षसि
३ २ ३ २ ३ १ २
अभि देवाँ अयास्यः १३

३ १ २ ३ २उ ३ २ ३ १ २
५१० अपघ्नन्पवते मृधोऽप सोमो अराव्णः
२ ३ १ २ ३ २
गच्छन्निन्द्रस्य निष्कृतम् १४

इति द्वितीया दशतिः २ चतुर्थः खण्डः ४

इति गायत्र यः

(३)

(१-१२) सप्तर्षयः ॥ पवमानः सोमः ॥ बृहती ॥

३ १ २३ १२ ३१ २र
५११ पुनानः सोम धारयापो वसानो अर्षसि
१ २३ १ २र ३१ २ ३ २ ३ १ २३ १२
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः १

२ ३ १ २ ३२उ ३ १ २ ३ २ ३ २
५१२ परीतो षिञ्चता सुतँ सोमो य उत्तमँ हविः
३ १ २र ३ २ऽ २र ३ २ ३ २ ३ १ २
दधन्वाँ यो नर्यो अप्स्वा३न्तरा सुषाव सोममद्रिभिः २

१ २ ३ १ २र ३ १ २र ३ १ २
५१३ आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया
२ ३ २ ३ २ ३क २र ३ २ ३ २ ३ १ २
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ३

१ २ ३ १ २ ३ २ ३१ २ ३ १ २
५१४ प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा
३ १ २र ३ १ २र ३२ ३ १ २ ३ १ २
अँशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ४

१ २ ३ २ ३ २ ३२ ३ २ ३१ २
५१५ सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम्
१ २ ३ १ २ ३ १२ ३ १ २ ३ १२
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ५

२ ३१ २ ३ १ २ ३ १ २
५१६ तवाहँ सोम रारण सख्य इन्दो दिवेदिवे
३ १ २ ३ १ २ ३ १ २र ३ २उ ३ १ २
पुरूणि बभ्रो नि चरन्ति मामव परिधीँरति ताँ इहि ६

३ १ २ ३१ २र
५१७ मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि
३ २ ३ १ २ ३ १ २३ २३ १ २ ३क २र
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ७

३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
५१८ अभि सोमास आयवः पवन्ते मद्यं मदम्
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः ८

३ १ २३ १२ ३२ ३ २३ १२ ३२
५१९ पुनानः सोम जागृविरव्या वारैः परि प्रियः
१ २र ३ १ २ ३१ २
त्वं विप्रो अभवोऽङ्गिरस्तम मध्वा यज्ञं मिमिक्ष णः ९

१ २ ३ २३ १ २ ३१ २ ३२
५२० इन्द्राय पवते मदः सोमो मरुत्वते सुतः
३१ २ ३ १ २र ३ १ २ ३ १ २
सहस्रधारो अत्यव्यमर्षति तमी मृजन्त्यायवः १०

१ २ ३ १ २ ३ १ २र ३ १ २
५२१ पवस्व वाजसातमोऽभि विश्वानि वार्या
१ २ ३ १ २ ३ १ २र ३ १ २ ३२
त्वँ समुद्रः प्रथमे विधर्मं देवेभ्यः सोम मत्सरः ११

१ २ ३ २३ २ ३ १२
५२२ पवमाना असृक्षत पवित्रमति धारया
३१ २ ३ १ २ ३ १ २र ३ २ ३ १ २र
मरुत्वन्तो मत्सरा इन्द्रिया हया मेधामभि प्रयाँसि च १२

इति तृतीया दशतिः ३ पञ्चमः खण्डः ५ इति बृहत्यः

(४)

(१-१०) १, ९ उशना काव्यः २ बृषगणो वासिष्ठः ३, ७ पराशरः शाक्त्यः ४, ६ वसिष्ठो मैत्रावरुणिः ५, १० प्रतर्दनो दैवोदासिः ८ प्रस्कण्वः काण्वः ॥ पवमानः सोमः ॥ त्रिष्टुप् ॥

१ २र ३ २ ३ २ ३ १ २३ १ २ ३ २ ३ १ २र
५२३ प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष
२ ३ १ २ ३ १२ ३ २३ १ २ ३ १ २ ३ १ २
अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति १

१ २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २
५२४ प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति
१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३क २र ३ १ २
महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् २

३ १ २र ३ १ २र ३१ २ ३ १ २र ३ २
५२५ तिस्रो वाच ईरयति प्र वह्निरृतस्य धीतिं ब्रह्मणो मनीषाम्

१ २ ३ १२ ३ १ २ ३ १२ ३१ २ ३ २
गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ३

३ २ ३ २ ३१ २ ३१ २ ३ २ ३ २ ३ १२ २ १ २
५२६ अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम्
३२ ३ २३ १२ ३१२ ३२३ १२ ३२ ३ १ २
सुतः पवित्रं पर्येति रेभन्मितेव सद्म पशुमन्ति होता ४

१२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
५२७ सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः
३ १ २र ३ १ २र ३१ २ ३ १ २र
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ५

३ १ २३१ २र ३ १ २ ३ १२ ३ १ २
५२८ अभि त्रिपृष्ठं वृषणं वयोधामाङ्गोषिणमवावशन्त वाणीः
२ ३ १ २ ३ १२ ३२उ ३ १ २३ १ २ ३ १ २
वना वसानो वरुणो न सिन्धुर्वि रत्नधा दयते वार्याणि ६

१ २ ३१ २३१ २र ३१२ ३ १ २र ३ २
५२९ अक्रान्त्समुद्रः प्रथमे विधर्मं जनयन्प्रजा भुवनस्य गोपाः
१ २ ३ २३ २ ३ २ ३ १ २ ३१ २र ३ १ २र
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ७

१ २ ३ २ ३ २ ३ १ २३ २३ १२ ३१२ ३२
५३० कनिक्रन्ति हरिरा सृज्यमानः सीदन्वनस्य जठरे पुनानः
१ २३१ २ ३ २ ३ १ २र ३ १ २ ३ १ २
नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयत स्वधाभिः ८

३२उ ३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ १२
५३१ एष स्य ते मधुमाँ इन्द्र सोमो वृषा वृष्णः परि पवित्रे अक्षाः
३ १ २३ १ २ ३ १ २ ३ २ ३ २उ ३क २र
सहस्रदाः शतदा भूरिदावा शश्वत्तमं बर्हिरा वाज्यस्थात् ९

१ २ ३ १ २ ३ २ ३ १ २र ३ २ ३ २ ३ १ २
५३२ पवस्व सोम मधुमाँ ऋतावापो वसानो अधि सानो अव्ये
२ ३ १ २ ३१ २ ३ १ २ ३१ २ ३ १ २
अव द्रोणानि घृतवन्ति रोह मदिन्तमो मत्सर इन्द्रपानः १०

इति चतुर्थी दशतिः ४ षष्ठः खण्डः ६

(५)

(१-१२) १ प्रतर्दनो दैवोदासिः २, १० पराशरः शाक्त्यः ३ इन्द्रप्रमतिर्वासिष्ठः ४ वसिष्ठो मैत्रावरुणिः ५ कर्णश्रुद्वासिष्ठः ६ नोधा गौतमः ७ कण्वो घौरः ८ मन्युर्वासिष्ठः ९ कुत्स आङ्गिरसः ११ कश्यपो मारीचः १२ प्रस्कण्वः काण्वः ॥

पवमानः सोमः ॥ त्रिष्टुप् ॥

१ २ ३ २उ ३ २३ १ २ ३ १ २ ३ १ २ ३ १ २
५३३ प्र सेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते अस्य सेना
३ २ ३ १ २ ३ १ २र ३ २र ३ १ २ ३ १ २
भद्रान्कृण्वन्निन्द्रहवान्त्सखिभ्य आ सोमो वस्त्रा रभसानि दत्ते १

२ ३ २ ३ १ २ ३ २३ २ ३ २ ३ १ २र
५३४ प्र ते धारा मधुमतीरसृग्रन्वारं यत्पूतो अत्येष्यव्यम्
१ २ ३ १ २ ३ १ २ १ २ ३ २ ३ १ २ ३ २
पवमान पवसे धाम गोनां जनयन्त्सूर्यमपिन्वो अर्कैः २

१ २ ३क २र ३ १ २र ३ १ २र
५३५ प्र गायताभ्यर्चाम देवान्त्सोमँहिनोत महते धनाय
३ १ २ ३ ३ २३ २ ३ १ २ ३ १ २ ३ १ २र
स्वादुः पवतामति वारमव्यमा सीदतु कलशं देव इन्दुः ३

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २र ३ १ २
५३६ प्र हिन्वानो जनिता रोदस्यो रथो न वाजँ सनिषन्नयासीत्
२ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
इन्द्रं गच्छन्नायुधा सँशिशानो विश्वा वसु हस्तयोरादधानः ४

२ ३ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २र
५३७ तक्षद्यदी मनसो वेनतो वाग्ज्येष्ठस्य धर्म द्युक्षोरनीके
१ २ ३ २३ १ २ ३ २उ ३ १ २ ३ २ ३ २ ३ १ २
आदीमायन्वरमा वावशाना जुष्टं पतिं कलशे गाव इन्दुम् ५

३ १ २ ३ १ २ ३ २ ३ १२ ३ २ ३ १ २
५३८ साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः
२ ३ १ २ ३ १ २र ३ १ २ ३ २ ३ २ ३ २
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ६

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ २३ १ २र
५३९ अधि यदस्मिन्वाजिनीव शुभः स्पर्धन्ते धियः सूरे न विशः
३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
अपो वृणानः पवते कवीयान्व्रजं न पशुवर्धनाय मन्म ७

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३ १ २
५४० इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय
२ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २
हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ८

१ २ ३ १ २ ३ १ २र ३ १ २ ३ १२ ३ १ २
५४१ अया पवा पवस्वैना वसूनि माँश्चत्व इन्द्रो सरसि प्र धन्व
३ २ ३ २ ३ २ ३ २ ३ १ २३१ २ ३१ २३ १२
ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ९

३ १ २र ३ १ २ ३ १ २र ३ २
५४२ महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान्
१ २ ३ २ ३ १ २ ३ १ २र ३ २ ३ २ ३ १ २
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः १०

१ २ ३ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ २
५४३ असर्जि वक्वा रथ्ये यथाजौ धिया मनोता प्रथमा मनीषा
२ ३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
दश स्वसारो अधि सानो अव्ये मृजन्ति वह्निँसदनेष्वच्छ ११

३ २ ३ २ ३ २ ३ १ ३ १ २ ३ १ २ ३ २ ३ १ २
५४४ अपामिवेदूर्मयस्तर्तुराणाः प्र मनीषा ईरते सोममच्छ
३ २ ३ १ २ ३ २ ३ १ २र ३ २ ३ १ २
नमस्यन्तीरुप च यन्ति सं चाच विशन्त्युशतीरुशन्तम् १२

इति पञ्चमी दशतिः ५ सप्तमः खण्डः ७

इति त्रिष्टुभः ॥ इति षष्ठप्रपाठकस्य प्रथमोऽर्धः ६

(६)

(१-९) १ अन्धीगुः श्यावाश्विः २ नहुशो मानवः ३ ययातिर्नाहुषः ४ मनुः सांवरणः ५, ८ अम्बरीषो वार्षागिरः ऋजिष्वा भारद्वाजश्च ६, ७ रेभसूनू काश्यपौ ९ प्रजापतिर्वैश्वामित्रो वाच्यो वा ॥ पवमानः सोमः ॥ अनुष्टुप् ७ बृहती ॥

अथ षष्ठप्रपाठकस्य द्वितीयोऽर्धः ६

३ १ २ ३ १ २ ३ १ २ ३ १ २
५४५ पुरोजिती वो अन्धसः सुताय मादयित्नवे
२ ३ १ २ ३ १ २ ३क २र
अप श्वानँश्नथिष्टन सखायो दीर्घजिह्व्यम् १

३ २ ३ २ ३ २उ ३ १ २ ३ २ २
५४६ अयं पूषा रयिर्भगः सोमः पुनानो अर्षति
१ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ २
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे २

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
५४७ सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः
३ १ २ ३ १ २ ३ १ २
पवित्रवन्तो अक्षरन्देवान्गच्छन्तु वो मदाः ३

१ २ ३ १ २ ३ १ २ ३ १ २
५४८ सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः
३ २ ३ १ २३ १ २ ३क २र ३ १ २
मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ४

३ १ २ ३ १ २ ३ १ २ ३ १ २
५४९ अभी नो वाजसातमँरयिमर्ष शतस्पृहम्
१ २ ३ १ २ ३ १ २ ३ १ २
इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ५

३ १ २ ३ १ २ ३ १ २र ३ १ २
५५० अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम्
३ २उ ३ १ २ ३ १ २ ३ १ २
वत्सं न पूर्व आयुनि जातँरिहन्ति मातरः ६

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
५५१ आ हर्यताय धृष्णवे धनुष्टन्वन्ति पौँस्यम्
३ २उ ३ १ २ ३ १ २ ३ १ २र ३ १ २
शुक्रा वि यन्त्यसुराय निर्णिजे विपामग्रे महीयुवः ७

२ ३ १ २ ३ १ २र ३ १ २ ३ १ २
५५२ परि त्यँहर्यतँ हरिं बभ्रुं पुनन्ति वारेण
२ ३ २उ ३ २उ ३ १ २ ३ १ २र
यो देवान्विश्वाँइत्परि मदेन सह गच्छति ८

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २र
५५३ प्र सुन्वानायान्धसो मर्तो न वष्ट तद्वचः
२ ३ १ २ ३ १ २ ३ २ ३ १ २र
अप श्वानमराधसँहता मखं न भृगवः ९

इति षष्ठी दशतिः ६ अष्टमः खण्डः ८

इत्यनुष्टुभः

(७)

(१-१२) १-३, ५ कविर्भार्गवः ४, ६ सिकता निवावरी ७ रेणुर्वैश्वामित्रः ८ वेनो भार्गवः ९ वसुर्भारद्वाजः १० वत्सप्रिर्भालन्दः ११ गृत्समदः, शौनकः १२ पवित्र आङ्गिरसः ॥ पवमानः सोमः ॥ जगती ॥

५५४ अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः १

५५५ अचोदसो नो धन्वन्त्विन्दवः प्र स्वानासो बृहद्देवेषु हरयः
वि चिदश्नाना इषयो अरातयोऽर्यो नः सन्तु सनिषन्तु नो धियः २

५५६ एष प्र कोशे मधुमाँ अचिक्रददिन्द्रस्य वज्रो वपुषो वपुष्टमः
अभ्यृ३तस्य सुदुघा घृतश्चुतो वाश्रा अर्षन्ति पयसा च धेनवः ३

५५७ प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतँ सखा सख्युर्न प्र मिनाति सङ्गिरम्
मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा ४

५५८ धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः
हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजाँसि कृणुषे नदीष्वा ५

५५९ वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसाँ दिवः
प्राणा सिन्धूनाँ कलशाँ अचिक्रददिन्द्रस्य हार्द्याविशन्मनीषिभिः ६

५६० त्रिरस्मै सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि

३ २३ १ २र ३ २ ३ १ २ ३ २३१ २र
चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत ७

१ २ ३ १२३ १ २ ३ १ २र ३ १ २ ३ २
५६१ इन्द्राय सोम सुषुतः परि स्रवापामीवा भवतु रक्षसा सह
२ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
मा ते रसस्य मत्सत द्वयाविनो द्रविणस्वन्त इह सन्त्विन्दवः ८

१ २ ३ १ २ ३ २उ ३ २ ३ १ २ ३ २ ३ १ २र
५६२ असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत्
३ २उ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
पुनानो वारमत्येष्यव्ययँ श्येनो न योनिं घृतवन्तमासदत् ९

२ ३२उ ३ १ २ ३ २ ३ १ २ ३ २ ३ २उ ३ १ २
५६३ प्र देवमच्छा मधुमन्त इन्दवोऽसिष्यदन्त गाव आ न धेनवः
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
बर्हिषदो वचनावन्त ऊधभिः परिस्रुतमुस्रिया निर्णिजं धिरे १०

३ २ ३क २र ३ १ २ ३ १ २ ३ २ ३क २र
५६४ अञ्जते व्यञ्जते समञ्जते क्रतुँ रिहन्ति मध्वाभ्यञ्जते
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
सिन्धोरुऽच्छ्वासे पतयन्तमुक्षणँ हिरण्यपावाः पशुमप्सु गृभ्णते ११

३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
५६५ पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः
१ २ ३२उ ३ १ २ ३ २ ३ १ २र ३ १ २र
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सं तदाशत १२

इति सप्तमी दशतिः ७ नवमः खण्डः ९

इति जगत्यः

(८)

(१-१२) १, ७, ११ अग्निश्चाक्षुषः २ चक्षुर्मानवः ३, ४, ९, १० पर्वतनारदौ काण्वौ

५ त्रित आप्त्यः ६ मनुराप्सवः ८, १२ द्वित आप्त्यः ॥ पवमानः सोमः ॥

उष्णिक् ॥

२ ३ १ २ ३ २ ३ १ २र ३ १२
५६६ इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः
३ २ ३ २ ३ १ २ ३ १ २
श्रुष्टे जातास इन्दवः स्वर्विदः १

१ २ ३ १ २ ३ १ २ ३ १ २
५६७ प्र धन्वा सोम जागृविरिन्द्रायेन्दो परि स्रव
३ २ ३ २ ३ १ २ ३ १ २
द्युमन्तँ शुष्ममा भर स्वर्विदम् २

१ २ ३ १ २र ३ २ ३ १ २
५६८ सखाय आ नि षीदत पुनानाय प्र गायत
२ ३ २ ३ १ २र ३ २
शिशुं न यज्ञैः परि भूषत श्रिये ३

१ २ ३ १ २ ३ २ ३ १ २
५६९ तं वः सखायो मदाय पुनानमभि गायत
२ ३ २ ३ १ २ ३ १ २
शिशुं न हव्यैः स्वदयन्त गूर्तिभिः ४

३ १ २र ३ १ २ ३ २ ३ २ ३ १ २
५७० प्राणा शिशुर्महीनाँ हिन्वन्नृतस्य दीधितिम्
२ ३ १ २ ३ १ २ ३ १ २ ३ २
विश्वा परि प्रिया भुवदध द्विता ५

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
५७१ पवस्व देववीतय इन्दो धाराभिरोजसा
२ ३ २ ३ १ २
आ कलशं मधुमान्त्सोम नः सदः ६

१ २ ३ २ ३ २उ ३ २३ १ २
५७२ सोमः पुनान ऊर्मिणाव्यं वारं वि धावति
१ २ ३ १ २र ३ १ २
अग्रे वाचः पवमानः कनिक्रदत् ७

१ २ ३ १ २ ३ २ ३ १ २३ १ २
५७३ प्र पुनानाय वेधसे सोमाय वच उच्यते
३ १ २र ३ १ २ ३ १ २
भृतिं न भरा मतिभिर्जुजोषते ८

१ २ ३ १ २ ३ १ २
५७४ गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव
१ २ ३ २ ३ २ ३ १ २
शुचिं च वर्णमधि गोषु धारय ९

३ १ २ ३ १ २ ३ १ २र
५७५ अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत
१ २ ३ १ २ ३ १ २
गोभिष्टे वर्णमभि वासयामसि १०

१ २ ३ २उ ३ २ ३ १ २ ३ १ २
५७६ पवते हर्यतो हरिरति ह्वराꣳसि रꣳह्या
३क २र ३ १ २ ३ २ ३ १ २
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः ११

२ ३ १ २ ३ २ ३ १ २ ३ १ २
५७७ परि कोशं मधुश्चुतꣳ सोमः पुनानो अर्षति
३ २उ ३ १ २ ३ १ २
अभि वाणीर्ऋषीणाꣳ सप्ता नूषत १२

इत्यष्टमी दशतिः ८ दशमः खण्डः १०

(९)

(१-८) १ गौरवीतिः शाक्त्यः २ उर्ध्वसद्मा आङ्गिरसः ३, ८ ऋजिश्वा भारद्वाजः ४ कृतयशा आंगिरसः ५ ऋणंचयो राजर्षिः ६ शक्तिर्वासिष्ठः ७ ऊरुरांगिरसः ॥

पवमानः सोमः ॥ ककुप् ५ यवमध्या गायत्री ॥

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
५७८ पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः
१ २ ३ १ २ ३ १ २
महि द्युक्षतमो मदः १

३ २ ३ २ ३२उ ३ १ २ ३ १ २ ३ २
५७९ अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम्
१ २र ३ १ २
वि कोशं मध्यमं युव २

१ २ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ १ २
५८० आ सोता परि षिञ्चताश्वं न स्तोममप्तुरꣳरजस्तुरम्
३ १ २ ३ १ २
वनप्रक्षमुदप्रुतम् ३

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ ३ १ २
५८१ एतमु त्यं मदच्युतꣳ सहस्रधारं वृषभं दिवोदुहम्
२ ३ १ २ ३ १ २
विश्वा वसूनि बिभ्रतम् ४

१ २ ३ १ २र ३ २ ३ १ २३ १ २र
५८२ स सुन्वे यो वसूनां यो रायामानेता य इडानाम्
२ ३ १ २ ३ २
सोमो यः सुक्षितीनाम् ५

२ ऽ १ २ ३ १ २ ३ १ २ ३ १ २
५८३ त्वं ह्या३ङ्ग दैव्यं पवमान जनिमानि द्युमत्तमः
३ १ २ ३ १ २
अमृतत्वाय घोषयन् ६

३ १ २र ३ २ ३ १२ ३ १ २
५८४ एष स्य धारया सुतोऽव्या वारेभिः पवते मदिन्तमः
१ २ ३ २३ १ २
क्रीडन्नूर्मिरपामिव ७

२ ३ २ ३ २ ३ २ ३ १ २र ३ १ २र ३ १ २
५८५ य उस्त्रिया अपि या अन्तरश्मनि निर्गा अकृन्तदोजसा ।
३ २ ३ १ २ ३ २ ३१ २ ३ १ २ ३ १ २
अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवा रुज ।
१ ३ १ २ ३ १ २
ओ३म् वर्मीव धृष्णवा रुज ८

इति नवमी दशतिः ९ एकादशः खण्डः ११ इत्युष्णिक्ककुभः ॥

इति षष्ठप्रपाठकस्य द्वितीयोऽर्धः षष्ठप्रपाठकश्च समाप्तः ६ इति पञ्चमोऽध्यायः ५

इति छन्दोगप्रकृतिऋक् समाप्ता ॥ इति सौम्यं पावमानं काण्डं पर्व वा समाप्तम् ॥

इति पूर्वार्चिकः समाप्तः ॥

# आरण्य आर्चिकः

## अथ आरण्यं काण्डम्

## अथ षष्ठोऽध्यायः

### (१)

(१-९) १ शंयुर्बार्हस्पत्यः २ वसिष्ठो मैत्रावरुणिः ३, ६ वामदेवो गौतमः ४ शुनःशेप आजीगर्तिः कृत्रिमो देवरातो वैश्वामित्रो वा ५ कुत्स आंगिरसः ७, ८ अमहीयुरांगिरसः ९ आत्मा ॥ इन्द्रः ४ वरुणः ५, ७, ८ पवमानः सोमः ६ विश्वे देवाः ९ अन्नम् ॥ १ बृहती २, ४, ५, ९ त्रिष्टुप् ३, ७-८ गायत्री ६ एकपाज्जगती ॥

२ ३ १ २ ३ १ २३ १ २ ३ १ २ ३ १ २
५८६ इन्द्र ज्येष्ठं न आ भर ओजिष्ठं पुपुरि श्रवः
१ २र ३ १ २ ३ १र २र
यद्दिधृक्षेम वज्रहस्त रोदसी उभे सुशिप्र पप्राः १

२ ३ २ ३ १ २ ३ १र २उ ३ २ ३ १ २३ १ २
५८७ इन्द्रो राजा जगतश्चर्षणीनामधिक्षमा विश्वरूपं यदस्य
१ २ ३ २३ १ २ ३ २उ ३ १ २ ३ २
ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतं चिदर्वाक् २

२ ३२ ३ २ ३ १ २ ३२उ ३ २ ३क २र
५८८ यस्येदमा रजोयुजस्तुजे जने वनँ स्वः
१ २ ३ १ २ ३ २
इन्द्रस्य रन्त्यं बृहत् ३

१ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २र ३ १ २
५८९ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमँ श्रथाय
१ २ ३ २ ३ १ २र ३ २ ३ १ २
अथादित्य व्रते वयं तवानागसो अदितये स्याम ४

१ २ ३ १ २र ३ १ २ ३१र २र ३ १ २
५९० त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत्
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
तन्नो मित्रो वरुणो मामहन्ता मदितिः सिन्धुः पृथिवी उत द्यौः ५

३ १ २र ३२उ ३ २
५९१ इमं वृषणं कृणुतैकमिन्माम् ६

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
५९२ स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः
३ १ २र
वरिवोवित्परिस्रव ७

३ १ २र ३२उ ३ २ ३ १ २
५९३ एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम्
१ २
सिषासन्तो वनामहे ८

३ १ २ ३ १ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
५९४ अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम
२ ३ १ २ ३ २उ ३ १ २ ३२उ ३ १ २ ३ १ २
यो मा ददाति स इदेवमावदहमन्नमन्नमदन्तमद्मि ९

इति प्रथमा दशतिः १ प्रथमः खण्डः १

(२)

(१-७) १ श्रुतकक्ष आङ्गिरसः २ पवित्र आङ्गिरसः ३, ४ मधुच्छन्दा वैश्वामित्रः ५ प्रथो वासिष्ठः ६ गृत्समदः शौनकः ७ नृमेधपुरुमेधावांगिरसौ ॥ इन्द्रः २ पवमानः सोमः ५ विश्वे देवाः ६ वायुः ॥ गायत्री २ जगती ५ त्रिष्टुप् ७ अनुष्टुप् ॥

२ ३ १ २ ३ २ ३ १ २
५९५ त्वमेतदधारयः कृष्णासु रोहिणीषु च
१ २ ३ २ ३ १ २
परुष्णीषु रुशत्पयः १

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
५९६ अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः
३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः २

२ ३ २उ ३ २ ३ १ २ ३ १ २ ३ १ २
५९७ इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा
१ २ ३ १ २३ १ २
इन्द्रो वज्री हिरण्ययः ३

२ ३ १ २ ३ १ २
५९८ इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च
३ २ ३ १ २ ३ १ २
उग्र उग्राभिरूतिभिः ४

१ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ २
५९८ प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत्
३ १ २र ३ २ ३ १ २ ३१ २र ३ १ २
धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः ५

३ १ २र ३ १ २ ३ २ ३ १ २
६०० नियुत्वान्वायवा गह्ययँ शुक्रो अयामि ते
१ २ ३ २ ३ २
गन्तासि सुन्वतो गृहम् ६

१ २र ३ १ २ ३१ २
६०१ यज्ञायथा अपूर्व्य मघवन्वृत्रहत्याय
१ २ ३ १ २ ३ १ २ ३ १ २र
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ७

इति द्वितीया दशतिः २ द्वितीयः खण्डः २

(३)

(१-१३) १, ५, ७, १० वामदेवो गौतमः २, ३ गोतमो राहूगणः ४ मधुच्छन्दा वैश्वामित्रः ६ गृत्समदः शौनकः ८ भरद्वाजो बार्हस्पत्यः ९ ऋजिश्वा भारद्वाजः ११ हिरण्यस्तूप आंगिरसः १२, १३ विश्वामित्रो गाथिनः ॥ १ प्रजापतिः २, ३ सोमः ४, ५, ८, १३ अग्निः ६ अपांनपात् ७ रात्रिः ९ विश्वेदेवाः १० लिंगोक्ता ११ इन्द्रः १२ आत्मा अग्निर्वा ॥ त्रिष्टुप् १, ७ अनुष्टुप् ४ गायत्री ८, ९ जगती १० महापंक्तिः ॥

२ ३ २ ३ २ ३ १ २र ३ २ ३ १ २र
६०२ मयि वर्चो अथो यशोऽथो यज्ञस्य यत्पयः
३ २ ३ १ २ ३ १ २र
परमेष्ठी प्रजापतिर्दिवि द्यामिव दृँहतु १

२ ३ १ २ ३ १ २ ३ २ ३ १र २र ३ १ २
६०३ सं ते पयाँसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः
३ १ २ ३ १ २ ३ १ २र ३ १ २
आप्यायमानो अमृताय सोम दिवि श्रवाँस्युत्तमानि धिष्व २

२ ३ १ २र ३ २ ३ २ ३ १ २ ३ २
६०४ त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः
१ २र ३ २ १ २ ३ १ २र ३ १ २र
त्वमातनोरुर्वा३न्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ३

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
६०५ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्
१ २ ३ १ २
होतारँरत्नधातमम् ४

१ २ ३ २उ ३ २ ३ २ ३ १ २३ १ २र
६०६ ते मन्वत प्रथमं नाम गोनां त्रिः सप्त परमं नाम जनान्
१ २ ३ २१क २र ३ २ ३ १ २ ३ १ २र ३ १ ३
ता जानतीरभ्यनूषत क्षा आविर्भुवन्नरुणीर्यशसा गावः ५

२ ३ १ २र ३ १ २ ३ २ ३ २ ३क२र
६०७ समन्या यन्त्युपयन्त्यन्याः समानमूर्वं नद्यस्पृणन्ति
२ ३ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
तमू शुचिँ शुचयो दीदिवाँसमपान्नपातमुप यन्त्यापः ६

१ २र ३ १ २ ३ १ २र ३ १ २र
६०८ आ प्रागाद्भद्रा युवतिरह्नः केतून्त्समीर्त्सति
१ २ ३ १ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अभूद्भद्रा निवेशनी विश्वस्य जगतो रात्री ७

३ २ ३ १ २ ३ २ ३ २उ ३ २ ३ १ २ ३ १ २ ३ १ २
६०९ प्रक्षस्य वृष्णो अरुषस्य नू महः प्र नो वचो विदथा जातवेदसे
३ १ २ ३ १ २र ३ २ ३ १ २ ३ १ २३ १ २
वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारुरग्नये ८

१ २ ३ १ २र ३ २ ३१र २र ३ १र २र ३ १ २
६१० विश्वे देवा मम शृण्वन्तु यज्ञमुभे रोदसी अपां नपाच्च मन्म
२ ३ १ २ ३ १ २ ३२उ ३ १ २
मा वो वचाँसि परिचक्ष्याणि वोचँ सुम्नेष्विद्वो अन्तमा मदेम ९

१ २ ३ १ २ २ १र २र ३ २
६११ यशो मा द्यावापृथिवी यशो मेन्द्रबृहस्पती
२ ३ १ २ ३ १ २ ३ १ २
यशो भगस्य विन्दतु यशो मा प्रतिमुच्यताम्
३ २ २ ३ २ ३ १ २ ३ १ २
यशसा३स्याः सँसदोऽहं प्रवदिता स्याम् १०

१ २ ३ २ ३क २र ३ १ २ ३ १ २ ३ १२ ३ १ २ ३ २
६१२ इन्द्रस्य नु वीर्याणि प्रवोचं यानि चकार प्रथमानि वज्री
२ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ११

३ १२ ३ १ २ ३ १ २ ३ २ ३ १ २३ १ २ ३ २
६१३ अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन्
३ १ २३ १ २र ३ १ २र ३ १ २ ३ १२ ३ १ २
त्रिधातुरर्को रजसो विमानोऽजस्रं ज्योतिर्हविरस्मि सर्वम् १२

२ ३ २ ३ १ २र ३१र २र ३ १ २र ३ १ २
६१४ पात्यग्निर्विपो अग्रं पदं वेः पाति यह्वश्चरणँ सूर्यस्य
२ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २ ३ २
पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्वः १३

इति तृतीया दशतिः ३ तृतीयः खण्डः ३

(४)

(१-१२) वामदेवो गौतमः ३-७ नारायणः ॥ १-२ अग्निः ३-७ पुरुषः ८ द्यावापृथिवी ९-११ इन्द्रः १२ गावः ॥ अनुष्टुप् १-२ पंक्तिः ८, ११, १२ त्रिष्टुप् ॥

१ २ ३ १ २ ३ २ ३ १ २
६१५ भ्राजन्त्यग्ने समिधान दीदिवो जिह्वा चरत्यन्तरासनि
१ २र ३ १ २ ३ २ ३ १ २र ३ १ २
स त्वं नो अग्ने पयसा वसुविद्रयिं वर्चो दृशेऽदाः १

३ १ २र ३ १ २र
६१६ वसन्त इन्नु रन्त्यो ग्रीष्म इन्नु रन्त्यः
३ १ २र ३१ २ ३ १ २र ३ १ २र
वर्षाण्यनु शरदो हेमन्तः शिशिर इन्नु रन्त्यः २

३ १ २ ३ १ २ ३ २ ३ १ २
६१७ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्
१र २र ३ १ २ ३ १ २ ३ २
स भूमिँ सर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ३

३ २ ३ २उ ३ १ २ ३ २ ३ १ २ ३ १ २
६१८ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः

२ ३ २ ३क २र ३ २ ३ २
तथा विष्वङ् व्यक्रामदशनानशने अभि ४

१ २ ३२उ ३ २ ३२उ ३ १ २
६१९ पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम्
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ५

१ २ ३ २उ ३ १ २ ३ १ २
६२० तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः
३ १ २ ३ १ २र ३ १ २र ३ १ २
उतामृतत्वस्येशानो यदन्नेनातिरोहति ६

१ २ ३ १ २ ३ २ ३ २ ३ १ २
६२१ ततो विराडजायत विराजो अधि पूरुषः
२ ३ १ २र ३ २उ ३ १ २ ३२
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ७

१ ३ ३ १ २ ३ १ २र ३ १ २ ३ १ २र
६२२ मन्ये वं द्यावापृथिवी सुभोजसौ ये अप्रथेथाममितमभि योजनम्
१ २ ३ १ २ ३ १ २र ३ १ २
द्यावापृथिवी भवतꣳ स्योने ते नो मुञ्चतमꣳहसः ८

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
६२३ हरी त इन्द्र श्मश्रूरायुतो ते हरितौ हरी
१ २ ३ १ २ ३ १ २ ३ १ २
तं त्वा स्तुवन्ति कवयः पुरुषासो वनर्गवः ९

२उ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
६२४ यद्वर्चो हिरण्यस्य यद्वा वर्चो गवामुत
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
सत्यस्य ब्रह्मणो वर्चस्तेन मा सꣳसृजामसि १०

२ ३ १ २ ३ ३ २ १ २ ३क २ ३ १ २
६२५ सहस्तन्न इन्द्र दद्ध्योज ईशे ह्यस्य महतो विरप्शिन्
२ ३ १ ३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २
क्रतुं न नृम्णꣳस्थविरं च वाजं वृत्रेषु शत्रून्त्सुहना कृधी नः ११

३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
६२६ सहर्षभाः सहवत्सा उदेत विश्वा रूपाणी बिभ्रतीर्द्व्यूध्नीः
३ २ ३ २ ३ १ २ ३ २ ३ १ २र ३ २ ३ १
उरुः पृथुरयं वो अस्तु लोक इमा आपः सुप्रपाणा इह स्त १२

इति चतुर्थी दशतिः ४ चतुर्थः खराडः ४

(५)

(१-१४) १ शतं वैखनसाः २ विभ्राट् सौर्यः ३ कुत्स आङ्गिरसः ४-६ सार्पराज्ञी ७-१४ प्रस्कराणवः काराणवः ॥ सूर्यः १ अग्निः पवमानः ४-६ आत्मा वा ॥ गायत्री २ जगती ३ त्रिष्टुप् ॥

२ ३ १ २ ३ २ ३ २ ३ १ २
६२७ अग्न आयूँषि पवस आसुवोर्जमिषं च नः
३१ २ ३ १ २
आरे बाधस्व दुच्छुनाम् १

३ २ ३१ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
६२८ विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम्
१२र ३ १ २ ३१ २ ३ १ २ ३ १ २ ३ १ २र
वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा वि राजति २

३ २ ३ २ ३ १ २ ३१ २ ३ १ २ ३ २ ३ १ २ ३ २
६२९ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः
२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
आप्रा द्यावापृथिवी अन्तरिक्षँसूर्य आत्मा जगतस्तस्थुषश्च ३

१ २र ३ १ २ ३ १ २ ३ २
६३० आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः
३ १ २ ३ १ २
पितरं च प्रयन्त्स्वः ४

३ १ २ ३ २उ ३ १ २ ३ २
६३१ अन्तश्चरति रोचनास्य प्राणादपानती
२र ३ १ २र
व्यख्यन्महिषो दिवम् ५

३ २उ ३ १ २ ३ १ २ ३ १ २
६३२ त्रिँशद्धाम वि राजति वाक्पतङ्गाय धीयते
२ ३ २ ३ २ ३ १ २
प्रति वस्तोरह द्युभिः ६

२ ३ २ ३ १ २ ३ १ २ ३ १ २
६३३ अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः

१ २ ३ १ २
सूराय विश्वचक्षसे ७

१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २
६३४ अदृश्रन्नस्य केतवो वि रश्मयो जनाँ॒अनु
१ २ ३ १ २
भ्राजन्तो अग्नयो यथा ८

३१ २ ३ १ २ ३ १ २
६३५ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य
२ ३ १ २ ३ २
विश्वमाभासि रोचनम् ९

३ २ ३ २ ३ १ २ ३ १ २र ३ १ २
६३६ प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान्
३ २उ ३क २र ३ २
प्रत्यङ् विश्वँ॒स्वर्दृशे १०

१ २ ३ १ २ ३ २ ३ २ ३ १ २
६३७ येना पावक चक्षसा भुरण्यन्तं जनाँ॒अनु
१ २ ३ १ २
त्वं वरुण पश्यसि ११

१ २र ३ १ २ ३ २ ३ १ २ ३ १ २
६३८ उद्द्यामेषि रजः पृथ्वहा मिमानो अक्तुभिः
२ ३ १ २
पश्यञ्जन्मानि सूर्य १२

१ २ ३ २ ३ २ ३ २ ३ १ २ ३क २र
६३९ अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्र्यः
१ २ ३ १ २
ताभिर्याति स्वयुक्तिभिः १३

३ १ २ ३ २ ३ २ ३ १ २
६४० सप्त त्वा हरितो रथे वहन्ति देव सूर्य
३ १ २
शोचिष्केशं विचक्षण १४

इति पञ्चमी दशतिः ५ पञ्चमः खण्डः ५

इति षष्ठोऽध्यायः ६

इति सामवेदसंहितायामारण्यं काण्डं पर्व वा समाप्तम्

## महानाम्न्यार्चिकः

(१-१०) प्रजापतिः ॥ इन्द्रस्त्रैलोक्यात्मा ॥ त्रिकं ॥

३ १ २ ३ २ ३१र २र ३ १ २
६४१ विदा मघवन् विदा गातुमनुशँसिषो दिशः
१ २ ३ १ २
शिक्षा शचीनां पते पूर्वीणां पुरूवसो १

३ २उ ३ १ २ ३ २ २
६४२ आभिष्ट्वमभिष्टिभिः स्वा३न्नाँशुः
१ २ ३ १ २३ १ २ ३ १ २ ३ २
प्रचेतन प्रचेतयेन्द्र द्युम्नाय न इषे २

३ २उ ३ २ ३ १ २र
६४३ एवा हि शक्रो राये वाजाय वज्रिवः
१ २ ३ २ ३ १ २ ३ २ ३
शविष्ठ वज्रिन्नृञ्जसे मँहिष्ठ वज्रिन्नृञ्जस
१ २ ३ २ ३ १ २
आ याहि पिब मत्स्व ३

३ २ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
६४४ विदा राये सुवीर्यं भुवो वाजानां पतिर्वशाँ अनु
१ २ ३ २ ३ १ २र ३ १ २
मँहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ४

१र २र
६४५ यो मँहिष्ठो मघोनामँशुर्न्न शोचिः
१ २ ३ १ २ ३ १ २ ३र २र
चिकित्वो अभि नो नयेन्द्रो विदे तमु स्तुहि ५

२ ३ २ ३ २उ ३ १ २ ३ १ २३ १ २
६४६ ईशे हि शक्रस्तमूतये हवामहे जेतारमपराजितम्
१ २ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ २
स नः स्वर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत् ६

२ ३ १ २ ३ १ २ ३ १ २३ १ २
६४७ इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम्
१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
स नः स्वर्षदति द्विषः स नः स्वर्षदति द्विषः ७

१ २ ३ १ २ ३ १र २र
६४८ पूर्वस्य यत्ते अद्रिवोँऽशुर्मदाय

३ १ २र ३ १ २
सुम्न आ धेहि नो वसो पूर्तिः शविष्ठ शस्यते
३ २उ ३ २ ३ १ २र ३ १ २
वशी हि शक्रो नूनं तन्नव्यँसंन्यसे ८

३ १र २र ३ १ २
६४९ प्रभो जनस्य वृत्रहन्त्समर्येषु ब्रवावहै
२ ३ २उ ३ १ २ ३ १ २ ३ २ ३ १ २
शूरो यो गोषु गच्छति सखा सुशेवो अद्वयुः ९

अथ पञ्च पुरीषपदानि

३ २ १ ३ १ २ ३ १ २
६५० एवाह्योऽ३ऽ३ऽ३वा । एवा ह्यग्ने । एवाहीन्द्र
३ १ २र ३ १ २र ३ १ २र
एवा हि पूषन् । एवा हि देवाः ॐ एवाहि देवाः १०

इति पञ्च पुरीषपदानि

इति महानाम्न्यार्चिकः समाप्तः

# सामवेदसंहिता

## उत्तरार्चिकः

## अथ प्रथमोऽध्यायः

### अथ प्रथमप्रपाठके प्रथमोऽर्धः १

(१-२३) १ असितः काश्यपो देवलो वा २ कश्यपो मारीचः ३ शतं वैखानसः ४, २१ भरद्वाजो बार्हस्पत्यः ५, ७ विश्वामित्रो गाथिनः ५ जमदग्निर्वा ६ इरिम्बिठिः काण्वः ८ अमहीयुरांगिरसः ९ सप्तर्षयः १० उशना काम्यः ११ वसिष्ठो मैत्रावरुणिः १२ वामदेवो गौतमः १३ नोधा गौतमः १४ कलिः प्रागाथः १५ मधुच्छन्दा वैश्वामित्रः १६ गौरवीतिः शाक्त्यः १७ अग्निश्चाक्षुषः १८ अन्धीगुः श्यावाश्विः १९ कविर्भार्गवः २० शंयुर्बार्हस्पत्यः २२ सोभरिः काण्वः २३ नृमेध आंगिरसः ॥ १-३, ८-१०, १५-१९ पवमानः सोमः ४, २०, २१ अग्निः ५ मित्रावरुणौ ७ इन्द्राग्नी ६, ११-१४, २२-२३ इन्द्रः ॥ १-८, १२, १५, १८, २१ गायत्री ९, ११, १३, १४, २० प्रगाथः १० त्रिष्टुप् १२ पादनिचृत् १६, २२ काकुभः प्रगाथः १७ उष्णिक् १८ अनुष्टुप् १९ जगती

२३ (१) ककुप् (२) उष्णिक् (३) पुर उष्णिक् ॥

६५१ उपास्मै गायता नरः पवमानायेन्दवे
अभि देवाँ इयक्षते १

६५२ अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः
देवं देवाय देवयु २

६५३ स नः पवस्व शं गवे शं जनाय शमर्वते
शँराजन्नोषधीभ्यः ३ १(ती)

१ २ ३ १ २ ३ १ २ ३ २
६५४ दविद्युतत्या रुचा परिष्टोभन्त्या कृपा
१ २ ३ १ २र
सोमाः शुक्रा गवाशिरः १

३ २ ३१ २ ३१ २र ३क २र
६५५ हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत्
१ २ ३ १ २
सीदन्तो वनुषो यथा २

३ १ २ ३ १ २ ३ २ ३ १ २
६५६ ऋधक्सोम स्वस्तये संजग्मानो दिवा कवे
१ २ ३ १ २ ३ २
पवस्व सूर्यो दृशे ३ २(यि)

१ २ ३ २ ३ १ २
६५७ पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत
१ २ ३ १ २ ३ १ २
अर्वन्तो न श्रवस्यवः १

२ ३ १ २ ३ २ ३ १ २ ३ १२ ३ १ २
६५८ अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये
१ २ ३ १ २
अवावशन्त धीतयः २

१ २ ३२उ ३ २ ३ २ ३ २ ३ १ २
६५९ अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः
१ २ ३ २ ३ २ ३ २
अग्मन्नृतस्य योनिमा ३ ३(कौ)

इति प्रथमः खण्डः १

२ ३ १ २ ३ १ २ ३ २ ३ १ २
६६० अग्न आ याहि वीतये गृणानो हव्यदातये
१ २र ३ १ २
नि होता सत्सि बर्हिषि १

१ २ ३ १ २ ३ १ २
६६१ तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि
३ १ २
बृहच्छोचा यविष्ठ्य २

१ २ ३ २ ३ २ ३ १ २
६६२ स नः पृथु श्रवाय्यमच्छा देव विवाससि
३ १ २ ३ १ २
बृहदग्ने सुवीर्यम् ३ ४

१ २ ३ १ २र
६६३ आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्
२ ३ १ २
मध्वा रजाँसि सुक्रतू १

३ १ २ ३ १ २ ३ १ २र
६६४ उरुशँसा नमोवृधा मह्ना दक्षस्य राजथः
३ २
द्राघिष्ठाभिः शुचिव्रता २

३ २ ३ १ २ ३ १ २ ३ १ २
६६५ गृणाना जमदग्निना योनावृतस्य सीदतम्
३ १ २र
पातँ सोममृतावृधा ३ ५(यि)

१ २ ३ २उ ३ २ ३ २ ३ १ २ ३ २
६६६ आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम्
२उ ३ १ २ ३ १ २
एदं बर्हिः सदो मम १

१ २ ३ २ ३ २ ३ १ २ ३ १ २
६६७ आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना
२ ३ १ २
उप ब्रह्माणि नः शृणु २

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
६६८ ब्रह्माणस्त्वा युजा वयँ सोमपामिन्द्र सोमिनः
३ १ २
सुतावन्तो हवामहे ३ ६(फौ)

१ २ ३ १ २ ३ २ ३ २उ ३ १ २
६६९ इन्द्राग्नी आ गतँ सुतं गीर्भिर्नभो वरेण्यम्
३ १ २ ३ २ ३ २
अस्य पातं धियेषिता १

१ २ ३ १ २र ३ १ २ ३ १ २
६७० इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः

३ १ २ ३ २ ३ २
अया पातमिमँ सुतम् २

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
६७१ इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे
१ २र ३ १ २
ता सोमस्येह तृम्पताम् ३ ७(ता)

इति द्वितीयः खण्डः २

३ १ २ ३ १ २र ३ १ २र
६७२ उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे
३२उ ३ २ ३ १ २
उग्रँ शर्म महि श्रवः १

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
६७३ स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः
३ १ २र
वरिवोवित्परि स्रव २

३ १ २र ३२उ ३ २ ३ १ २
६७४ एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम्
१ २
सिषासन्तो वनामहे ३ ८(ठी)

३ १ २ ३ १ २ ३ १ २र
६७५ पुनानः सोम धारयापो वसानो अर्षसि
१ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २३ १ २
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः १

३ १ २र ३ १ २र ३ २ ३ २ ३ २ ३ १ २
६७६ दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नँ सधस्थमासदत्
३ १ २ ३ १ २ ३क २र ३ १ २ ३ १ २ ३ २
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः २ ९(लु)

१ २र ३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
६७७ प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष
२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति १

३ १ २ ३ १ २र ३ २ ३ २ ३ १ २
६७८ स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः

३ २ ३ १ २ ३ २ ३१ २ ३ २ ३ २ ३१२ ३ २
पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः २

२ ३ १२ ३ १ २र ३१ २र ३ २ ३ १ २
६७९ ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन
१ २ ३ १ २३ १ २ ३ २ऽ २ ३ २३ १ २
स चिद्विवेद निहितं यदासामपीच्याꣳ गुह्यं नाम गोनाम् ३ १०(हु)

इति तृतीयः खण्डः ३

३ १ २ ३ १ २ ३१२
६८० अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः
१ २ ३ १ २र ३२ ३ १ २ ३ १२
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः १

१ २र ३ २ ३ १ २र ३ २ ३ १ २र
६८१ न त्वावाꣳ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते
३ १ २ ३ १ २ ३ १ २
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे २ ११(यी)

१ २ ३१ २र ३ २ ३ २ ३ २ १ २
६८२ कया नश्चित्र आ भुवदूती सदावृधः सखा
२ ३ १ २ ३ २
कया शचिष्ठया वृता १

१ २ ३ १ २र ३ १ २ ३ १ २
६८३ कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः
३ १ २ ३ २ ३ १ २
दृढा चिदारुजे वसु २

३ २उ ३ १ २ ३ १ २ ३ २
६८४ अभी षु णः सखीनामविता जरितृणाम्
३१ २ ३१२
शतं भवास्यूतये ३ १२(टा)

१ २ ३ १ २ ३ २ ३ १ २ ३१ २र
६८५ तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः
३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे १

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
६८६ द्युक्षꣳ सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम्

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
द्युमन्तं वाजँ शतिनँ सहस्रिणं मक्षू गोमन्तमीमहे २ १३(ही)

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
६८७ तरोभिर्वो विदद्वसुमिन्द्रँ सबाध ऊतये
३ १ २र ३ १ २ ३२ ३२उ ३ २ ३ १ २
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् १

२उ ३ १ २र ३ २ ३२उ ३ १ २ ३ १ २र
६८८ न यं दुध्रा वरन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः
२ ३ १ २ ३ १ २ ३ १ २र ३ २ ३क २र
य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् २ १४(जु)

इति चतुर्थः खण्डः ४

१ २ ३ १ २ ३ १ २ ३ १२
६८९ स्वादिष्ठया मदिष्ठया पवस्व सोम धारया
१ २ ३ १ २ ३ २
इन्द्राय पातवे सुतः १

३ २ ३ १ २ ३ २उ ३ १ २
६९० रक्षोहा विश्वचर्षणिरभि योनिमयोहते
१ २ ३ २ ३ १ २
द्रोणे सधस्थमासदत् २

३ १ २ ३ १ २ ३ १ २
६९१ वरिवोधातमो भुवो मँहिष्ठो वृत्रहन्तमः
२ ३ १ २ ३ १ २
पर्षि राधो मघोनाम् ३ १५(पौ)

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
६९२ पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः
१ २ ३ १ २ ३ १ २
महि द्युक्षतमो मदः १

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २
६९३ यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः
२ ३ १ २ ३क २र ३ २उ ३ २ ३ १ २
स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा वाजं नैतशः २ १६(प)

२ ३ १ २ ३ २ ३ १ २र ३ १२
६९४ इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः

३ २ ३ २ ३ १ २ ३ १ २
श्रुष्टे जातास इन्दवः स्वर्विदः १

३ १ २र ३ १ २र ३ २
६९५ अयं भराय सानसिरिन्द्राय पवते सुतः
२ ३ १ २ ३ १ २ ३ २
सोमो जैत्रस्य चेतति यथा विदे २

३ २उ ३ २ ३ २ ३ २ ३ २
६९६ अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णाति सानसिम्
१ २ ३ १ २ ३ १ २ ३ २
वज्रं च वृषणं भरत्समप्सुजित् ३ १७(कि)

३ १ २ ३ १ २ ३ १ २ ३ १ २
६९७ पुरोजिती वो अन्धसः सुताय मादयित्नवे
२ ३ १ २ ३ १ २ ३क २र
अप श्वानँ श्नथिष्टन सखायो दीर्घजिह्व्यम् १

१ २र ३ १ २ ३ १ २ ३ २
६९८ यो धारया पावकया परिप्रस्यन्दते सुतः
२ ३२ ३ १ २र
इन्दुरश्वो न कृत्व्यः २

२ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३ २
६९९ तं दुरोषमभी नरः सोमं विश्वाच्या धिया
३ १ २ ३ १ २
यज्ञाय सन्त्वद्रयः ३ १८(यि)

३ २ ३ १ २ ३ १ २ ३ १ २ ३ २उ ३ २ ३ १ २
७०० अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते
१ २र ३ २ ३२उ ३ २ ३ १ २ ३ २
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः १

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २र ३ २ ३ १ २र
७०१ ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः
१ २ ३ २ ३ १२ ३ २ऽ १ २ ३ २ ३ १ २ ३ २ ३ २
दधाति पुत्रः पित्रोरपीच्यां३नाम तृतीयमधि रोचनं दिवः २

१ २ ३ २ ३ १ २ ३ १ २ ३२उ ३ १ २३ १ २
७०२ अव द्युतानः कलशाँअचिक्रदन्नृभिर्येमाणः कोश आ हिरण्यये
३ २ ३१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
अभी ऋतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो वि राजसि ३ १९(दि)

इति पञ्चमः खराडः ५

३ १ २ ३ १ २ ३ १ २ ३ १ २
७०३ यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शँसिषम् १

३ १ २र ३ २ ३ १ २र ३ १ २र ३ १ २
७०४ ऊर्जो नपातँस हिनायमस्मयुर्दाशेम हव्यदातये
२ ३ १ २ ३ १ २र ३ २ ३ २ ३ २ ३ १ २
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् २ २०(यु)

२ ३ १ २र ३ १ २ ३ १ २ ३ १ २
७०५ एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः
३ १ २ ३ १ २
एभिर्वर्धास इन्दुभिः १

२ ३क २र ३ २ ३ १ २ ३ १ २
७०६ यत्र क्व च ते मनो दक्षं दधस उत्तरम्
२ ३ १ २
तत्रा योनिं कृणवसे २

१ २र ३ १ २ ३ १ २र
७०७ न हि ते पूर्तमक्षिपद्भुवन्नेमानां पते
२ ३ १ २
अथा दुवो वनवसे ३ २१(यी)

३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
७०८ वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः
१ २ ३ १ २
वज्रिञ्चित्रँहवामहे १

१ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ २
७०९ उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत्
१ २र ३ १ २ ३ २ ३ १ २ ३ २
त्वामिध्यवितारं ववृमहे सखाय इन्द्र सानसिम् २ २२(च)

२ ३क २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
७१० अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे
३ २ ३ १ २ ३ १ २
उदेव ग्मन्त उदभिः १

१ २र ३ २ ३ १ २ ३ १ २
७११ वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि
३ १ २ ३ १ २
वावृध्वाँसं चिदद्रिवो दिवेदिवे २

३ २ ३ १ २ ३२ ३ १ २ ३ १ २र ३ १ २ ३ १ २
७१२ युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे वचोयुजा
३ १ २ ३ १ २
इन्द्रवाहा स्वर्विदा ३ २३(यि)

इति षष्ठः खराडः ६

इति प्रथमप्रपाठके प्रथमोऽर्धः १ इति प्रथमोऽध्यायः १

अथ द्वितीयोऽध्यायः

अथ प्रथमप्रपाठके द्वितीयोऽर्धः १

(१-२२) १, ४ श्रुतकक्षः सुकक्षो वा आङ्गिरसः २, ८, १३-१५ वसिष्ठो मैत्रावरुणिः ३ मेधातिथिः काराववः प्रियमेधश्चाङ्गिरसः ५ इरिम्बिठिः कारावः ६ कुसीदी कारावः ७ त्रिशोकः कारावः ९ विश्वामित्रो गाथिनः १० मधुच्छन्दा वैश्वामित्रः ११ शुनःशेप आजीगर्तिः १२ नारदः कारावः १६ अवत्सारः काश्यपः १७ शुनःशेप आजीगर्तिः स देवरातः कृत्रिमो वैश्वामित्रः १७ मेध्यातिथिः कारावः १८ असितः काश्यपो देवलो वा १८ अमहीयुराङ्गिरसः १९ त्रित आप्त्यः २० सप्तर्षयः २१ शावाश्व आत्रेयः २२ अग्निश्चाक्षुषः २२ प्रजापतिर्वैश्वामित्रो वाच्यो वा ॥ १-१२ इन्द्रः १३ अग्निः १४ उषौ १५ अश्विनौ १६-२२ पवमानः सोमः ॥ १-११, १६-१९, २१ गायत्री १२, २२ उष्णिक् १३-१५, २० प्रगाथः १, २२ अनुष्टुप् ।

२ ३ २ ३ १ २ ३ १ २ ३ १ २र
७१३ पान्तमा वो अन्धस इन्द्रमभि प्र गायत
३ १ २ ३१ २ ३ १ २ ३ २
विश्वासाहँ शत्क्रतुं मँहिष्ठं चर्षणीनाम् १

३ १ २ ३१ २ ३ १ऽ १ २
७१४ पुरुहूतं पुरुष्टुतं गाथान्या३ँ सनश्रुतम्
२ ३ १ २
इन्द्र इति ब्रवीतन २

२ ३ १ २ ३ १ २ ३ १ २र ३ २
७१५ इन्द्र इन्नो महोनां दाता वाजानां नृतुः
३ १ २ ३ १ २
महाँ अभिज्ञ्वा यमत् ३ १(वा)

२ ३ १ २३ १२३ १ २
७१६ प्र व इन्द्राय मादनँ हर्यश्वाय गायत
१ २ ३ १ २
सखायः सोमपाव्ने १

२उ ३ २ ३ १ २ ३ २ ३२उ ३ १२
७१७ शँसेदुक्थँ सुदानव उत द्युक्षं यथा नरः
३ २ ३ १ २
चकृमा सत्यराधसे २

१ २ ३२उ ३ १ २
७१८ त्वं न इन्द्र वाजयुस्त्वं गव्युः शतक्रतो
१ २ ३ १ २
त्वँ हिरण्ययुर्वसो ३ २(गौ)

३ १ २ ३ १२ ३ १ २ ३ २ ३ १ २
७१९ वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः
१ २ ३ १ २
कण्वा उक्थेभिर्जरन्ते १

१ २ ३ १ २र ३ १ २ ३ २ ३ १ २
७२० न घेमन्यदा पपन वज्रिन्नपसो नविष्टौ
२र ३ १ २
तवेदु स्तोमैश्चिकेत २

३ १ २ ३ २ ३ २ ३ १ २र
७२१ इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति
१ २ ३ २ ३ १ २
यन्ति प्रमादमतन्द्राः ३ ३(पा)

१ २ ३ १ २ ३ १ २र ३ १२
७२२ इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः
३ १ २ ३१ २
अर्कमर्चन्तु कारवः १

२ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
७२३ यस्मिन्विश्वा अधि श्रियो रणन्ति सप्त सँसदः
१ २ ३ १ २
इन्द्रँ सुते हवामहे २

१ २ ३ १ २ ३ १ २ ३ १ २
७२४ त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत
१ २र ३ १ २
तमिद्वर्धन्तु नो गिरः ३ ४(ला)

इति प्रथमः खण्डः १

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
७२५ अयं त इन्द्र सोमो निपूतो अधि बर्हिषि
१ २ ३ २उ ३ १ २
एहीमस्य द्रवा पिब १

१ २ ३ १ २ ३ १ २र ३ २
७२६ शाचिगो शाचिपूजनायँरणाय ते सुतः
१ २ ३ १ २
आखण्डल प्र हूयसे २

१ २ ३ १ २ ३ १ २
७२७ यस्ते शृङ्गवृषो णपात्प्रणपात्कुण्डपाय्यः
२र ३ १ २र
न्यस्मिं दध्र आ मनः ३ ५(दि)

१ २र ३ १ २ ३ २ ३ १ २र
७२८ आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभँ सं गृभाय
३ १ २र
महाहस्ती दक्षिणेन १

३ १ २र ३ २ ३ १ २ ३ १ २
७२९ विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम्
३ १ २र
तुविमात्रमवोभिः २

१ २र ३ १ २र ३ १ २
७३० न हि त्वा शूर देवा न मर्तासो दित्सन्तम्
३२उ ३१ २
भीमं न गां वारयन्ते ३ ६(के)

३ १ २ ३२ ३१ २ ३१२
७३१ अभि त्वा वृषभा सुते सुतँसृजामि पीतये
३ १ २ ३ १२
तृम्पा व्यश्नुही मदम् १

१ २ ३१ २ ३ २ ३ २३१ २३ १ २
७३२ मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन्
१ २ ३ १२
मा कीं ब्रह्मद्विषं वनः २

३२ ३ १२ ३१ २ ३ १ २
७३३ इह त्वा गोपरीणसं महे मन्दन्तु राधसे
१२ ३१ २र
सरो गौरो यथा पिब ३ ७(या)

३१ २ ३२उ ३ २ ३ १२ ३१२
७३४ इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम्
१ २ ३ १ २
अनाभयिन्ररिमा ते १

१ २ ३२ ३२उ ३२ ३ २३ १ २
७३५ नृभिर्धौतः सुतो अश्नैरव्या वारैः परिपूतः
२ ३ २ ३ २ ३ १२
अश्वो न निक्तो नदीषु २

२ ३ २३ २ ३ १ २ ३१२ ३ १ २
७३६ तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः
१ २ ३ १ २३ १२
इन्द्र त्वास्मिंत्सधमादे ३ ८(थौ)

इति द्वितीयः खण्डः २

३१ २र ३१ २
७३७ इदँह्यन्वोजसा सुतँराधानां पते
२ ३ २ १ २
पिबा त्वा३स्य गिर्वणः १

२ ३ १२ ३ १ २र ३१ २र ३क २र
७३८ यस्ते अनु स्वधामसत्सुते नि यच्छ तन्वम्
१ २
स त्वा ममत्तु सोम्य २

१ २ ३ २उ ३ १ २ ३ १२
७३९ प्र ते अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः
२ ३१ २३ १२
प्र बाहू शूर राधसा ३ ९(पी)

२उ ३ १ २३१ २३ १ २र
७४० आ त्वेता नि षीदतेन्द्रमभि प्र गायत
१ २३ १२
सखाय स्तोमवाहसः १

३ १२ ३ १ २र ३ १ २
७४१ पुरूतमं पुरूणामीशानं वार्याणाम्
२ ३ २३ १ २ ३२
इन्द्रँसोमे सचा सुते २

१ २ ३ २३ १ २३ २ ३१ २र
७४२ स घा नो योग आ भुवत्स राये स पुरन्ध्या
२३ १२ ३१ २र
गमद्वाजेभिरा स नः ३ १०(टी)

१३ ३१ २३ १२
७४३ योगेयोगे तवस्तरं वाजेवाजे हवामहे
१ २३ १ २३१२
सखाय इन्द्रमूतये १

१२ ३१ २र ३१ २ ३ १ २र
७४४ अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम्
२ ३ १२ ३ २ ३२
यं ते पूर्वं पिता हुवे २

१ २ ३२३ १२ ३ १ २ ३ १ २
७४५ आ घा गमद्यदि श्रवत्सहस्त्रिणीभिरूतिभिः
१२ ३१२ ३ १२
वाजेभिरुप नो हवम् ३ ११(ला)

१ २ ३२३ ३२३ १२ ३क २र
७४६ इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम्
३२ ३२ ३ १ २ ३ २
विदे वृधस्य दक्षस्य महाँ हि षः १

१ २३१ २ ३ २ ३ १२ ३२
७४७ स प्रथमे व्योमनि देवानाँ सदने वृधः

३ २ ३ १ २ ३ १ २ ३ २
सुपारः सुश्रवस्तमः समप्सुजित् २

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
७४८ तमु हुवे वाजसातय इन्द्रं भराय शुष्मिणम्
१ २ ३ १ २र ३ १ २ ३ २
भवा नः सुम्ने अन्तमः सखा वृधे ३ १२(वा)

इति तृतीयः खण्डः ३

३ १ २ ३ १ २र ३ १ २र ३ १ २
७४९ एना वो अग्निं नमसोर्जो नपातमा हुवे
३ १ २र ३ १ २ ३१ २र ३ २ ३ १ २
प्रियं चेतिष्ठमरतिँ स्वध्वरं विश्वस्य दूतममृतम् १

१ २ ३ २ ३ १ २ ३ १ २ ३क २र
७५० स योजते अरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः
३ १ २ ३ २ ३ २ ३ १ २ ३२उ ३ १ २
सुब्रह्मा यज्ञः सुशमी वसूनां देवँ राधो जनानाम् २ १३(तु)

१ २ ३ २ऽ १ २ ३ २ ३ २
७५१ प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी १

२ ३ १ २ ३ २ ३ १ २ ३ १ २र ३ २
७५२ उदुस्रियाः सृजते सूर्यः सचा उद्यन्नक्षत्रमर्चिवत्
१ २र ३ २ ३ १ २ ३ २ ३ १ २
तवेदुषो व्युषि सूर्यस्य च सं भक्तेन गमेमहि २ १४(वा)

३ १ २ ३ १ २ ३ १ २
७५३ इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना
३ १ २ ३ १ २ ३ १ २ ३ १ २र
अयं वामह्वेऽवसे शचीवसू विशंविशँ हि गच्छथः १

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
७५४ युवं चित्रं ददथुर्भोजनं नरा चोदेथाँ सूनृतावते
३ २उ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
अर्वाग्रथँ समनसा नि यच्छतं पिबतँ सोम्यं मधु २ १५(चा)

इति चतुर्थः खण्डः ४

३ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
७५५ अस्य प्रत्नामनु द्युतँ शुक्रं दुदुह्रे अह्रयः
१ २ ३ १ २र
पयः सहस्रसामृषिम् १

३ १ २र ३ २ ३ १ २र
७५६ अयँ सूर्य इवोपदृगयँ सराँसि धावति
३ २ ३ २ ३ १ २र
सप्त प्रवत आ दिवम् २

३ १ २र ३ १ २र ३ १ २
७५७ अयं विश्वानि तिष्ठति पुनानो भुवनोपरि
१ २ ३ १ २र
सोमो देवो न सूर्यः ३ १६(ते)

३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
७५८ एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः
१ २ ३ १ २
हरिः पवित्रे अर्षति १

३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
७५९ एष प्रत्नेन मन्मना देवो देवेभ्यस्परि
३ १ २र
कविर्विप्रेण वावृधे २

३ २ ३ १ २र ३ २ ३ १ २
७६० दुहानः प्रत्नमित्पयः पवित्रे परि षिच्यसे
१ २ ३ १ २
क्रन्दं देवाँ अजीजनः ३ १७(हा)

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
७६१ उप शिक्षापतस्थुषो भियसमा धेहि शत्रवे
१ २ ३ २ ३ २
पवमान विदा रयिम् १

२ ३ २ ३ २ ३ २३
७६२ उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम्
इन्दुं देवा अयासिषुः २

१ २ ३
७६३ उपास्मै गायता नरः पवमानायेन्दवे

अभि देवाँ इयक्षते ३ १८(वौ)

इति पञ्चमः खराडः ५

१ २र ३ २ ३ १ २ ३ १ २
७६४ प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः
१ २ ३ १ २
वनानि महिषा इव १

३ १ २र ३ १ २ ३ २ ३ २ ३ १ २
७६५ अभि द्रोणानि बभ्रवः शुक्रा ऋतस्य धारया
२ ३ १ २
वाजं गोमन्तमक्षरन् २

३ १ २र ३ २ ३ १ २ ३ १ २
७६६ सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः
१ २ ३ १ २
सोमा अर्षन्तु विष्णवे ३ १९(वि)

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
७६७ प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा
३ १ २र ३ १ २र ३ २ ३ १ २ ३ १ २
अँशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् १

१ २ ३ १ २र ३ १ २ ३ २ ३ १ २र
७६८ आ हर्यतो अर्जुनो अत्के अव्यत प्रियः सूनुर्न मर्ज्यः
१ २ ३ २ ३ २ ३ १ २ ३ १ २र
तमीँहिन्वन्त्यपसो यथा रथं नदीष्वा गभस्त्योः २ २०(रु)

१ २र ३ २ १ २ ३ १ २
७६९ प्र सोमासो मदच्युतः श्रवसे नो मघोनाम्
३ २ ३ १ २
सुता विदथे अक्रमुः १

१ २ ३ १ २र ३ १ २र ३ २
७७० आदीँ हँसो यथा गणं विश्वस्यावीवशन्मतिम्
२ ३ १ २र
अत्यो न गोभिरज्यते २

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
७७१ आदीं त्रितस्य योषणो हरिँ हिन्वन्त्यद्रिभिः

२ ३ १ २ ३ १ २
इन्दुमिन्द्राय पीतये ३ २१(ली)

३ १ २ ३ १ २र ३ २ ३ १ २ ३ १ २
७७२ अया पवस्व देवयु रेभन्पवित्रं पर्येषि विश्वतः
२ ३ १ २
मधोर्धारा असृक्षत १

१ २ ३ २र
७७३ पवते हर्यतो हरि रति ह्वराँसि रँह्या
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः २

१ २ ३ १ २र
७७४ प्र सुन्वानायान्धसो मर्तो न वष्ट तद्वचः
अप श्वानमराधसँ हता मखं न भृगवः ३ २२(लि)

इति षष्ठः खण्डः ६

इति प्रथमप्रपाठके द्वितीयोऽर्धः प्रथमप्रपाठकश्च समाप्तः १

इति द्वितीयोऽध्यायः

अथ तृतीयोऽध्यायः

अथ द्वितीयप्रपाठके प्रथमोऽर्धः २

(१-१९) १ जमदग्निर्भार्गवः २, ५, १५ अमहीयुराङ्गिरसः ३ कश्यपो मारीचः ४, १० भृगुर्वारुणिर्जमदग्निर्भार्गवो वा ६-७ मेधातिथिः काण्वः ८ मधुच्छन्दा वैश्वामित्रः ९ वसिष्ठो मैत्रावरुणिः ११ उपमन्युर्वासिष्ठः १२ शंयुर्बार्हस्पत्यः १३ वालखिल्याः, प्रस्कण्वः काण्वः १४ नृमेध आङ्गिरसः १६ नहुषो मानवः १७ (१-२) सिकता निवावरी १७ (३) पृश्नियोऽजाः १८ श्रुतकक्षः सुकक्षो वा आङ्गिरसः १९ जेता माधुच्छन्दसः ॥ १-५, १०-११, १५-१७ पवमानः सोमः ६ अग्निः ७ मित्रावरुणौ ८, १२-१४, १८-१९ इन्द्रः ९ इन्द्राग्नी ॥ १-१०, १५, १८ गायत्री ११ त्रिष्टुप् १२-१४ प्रगाथः १६, १९ अनुष्टुप् १७ जगती ॥

१ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
७७५ पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः

३ १ २र ३ १ २
अभि विश्वानि काव्या १

१ २ ३ १ २ ३ २ ३ १ २र ३१ २
७७६ त्वँसमुद्रिया अपोऽग्रियो वाच ईरयन्
१ २
पवस्व विश्वचर्षणे २

२ ३ १ २र ३ १ २
७७७ तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे
१ २ ३ १ २
तुभ्यं धावन्ति धेनवः ३ १(यी)

१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
७७८ पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने
२ ३ २३ १ २
विश्वा अप द्विषो जहि १

१ २ ३ २ ३ १ २ ३ १ २ ३ २
७७९ यस्य ते सख्ये वयँसासह्याम पृतन्यतः
१ २ ३ १ २ ३ २
तवेन्दो द्युम्न उत्तमे २

१ २ ३ १ २र ३ २ ३ २ ३ १ २
७८० या ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे
१ २ ३ २
रक्षा समस्य नो निदः ३ २(ह)

१ २ ३ १ २ ३ १ २ ३ १ २
७८१ वृषा सोम द्युमाँअसि वृषा देव वृषव्रतः
२ ३ १ ३
वृषा धर्माणि दध्रिषे १

१ २ ३ २ ३ २ ३ २ ३ २३ १ २ ३ २
७८२ वृष्णस्ते वृष्ण्यँशवो वृषा वनं वृषा सुतः
१ २र ३ १ २र
स त्वं वृषन्वृषेदसि २

२ ३ १ २ ३ २ ३ १ २र ३ १ २र
७८३ अश्वो न चक्रदो वृषा सं गा इन्दो समर्वतः
१ २ ३ १ २र
वि नो राये दुरो वृधि ३ ३(लु)

२ ३ १ २ ३१ २ ३१ २
७८४ वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे
१ २ ३१ २
पवमान स्वर्दृशम् १

२३ १ २ ३ १ २ ३ १ २ ३ १ २
७८५ यदद्भिः परिषिच्यसे मर्मृज्यमान आयुभिः
१ २ ३ १ २
द्रोणे सधस्थमश्नुषे २

१ २ ३ २३ १ २
७८६ आ पवस्व सुवीर्यं मन्दमानः स्वायुध
३ १ २ ३ १ २
इहो ष्विन्दवा गहि ३ ४(यौ)

१ २ ३ २ ३१ २ ३ २
७८७ पवमानस्य ते वयं पवित्रमभ्युन्दतः
३ १ २र
सखित्वमा वृणीमहे १

१ २ ३ १ २ ३ १ २ ३ १२ ३ १२
७८८ ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया
१ २
तेभिर्नः सोम मृडय २

१ २ ३ १ २र ३ २ ३१ २ ३ १ २
७८९ स नः पुनान आ भर रयिं वीरवतीमिषम्
१ २ ३ १ २
ईशानः सोम विश्वतः ३ ५(ला)

इति प्रथमः खण्डः १

३ २ ३१ २ ३ १ २ ३ १ २
७९० अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्
३ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम् १

३ १ २ ३ १ २ ३ १ २ ३ १ २
७९१ अग्निमग्निँ हवीमभिः सदा हवन्त विश्पतिम्
३ १ २ ३ २
हव्यवाहं पुरुप्रियम् २

१ २ ३ २ ३ १ २ ३ २ ३ १ २
७९२ अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे
२ ३ १ २ ३ १ २
असि होता न ईड्यः ३ ६(यौ)

३ २ ३ १ २ ३ १ २ ३ १ २
७९३ मित्रं वयँ हवामहे वरुणँ सोमपीतये
२ ३ २ ३ १ २
या जाता पूतदक्षसा १

३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
७९४ ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती
२ ३ १ २र
ता मित्रावरुणा हुवे २

१ २ ३ १ २ ३ १ २र ३ १ २
७९५ वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः
१ २ ३ १ २
करतां नः सुराधसः ३ ७(वा)

२ ३ २ ३ १ २ ३ १ २र ३ १ २३ १ २
७९६ इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः
२ ३ १ २
इन्द्रं वाणीरनूषत १

२ ३ २र ३ २ ३ १ २ ३ १ २ ३ १ २
७९७ इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा
१ २ ३ १ २३ १ २
इन्द्रो वज्री हिरण्ययः २

२ ३ १ २ ३ १ २
७९८ इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च
३ २ ३ १ २ ३ १ २
उग्र उग्राभिरूतिभिः ३

१ २ ३ २ ३ १ २ ३ १ २र ३ २
७९९ इन्द्रो दीर्घाय चक्षस आ सूर्यँरोहयद्दिवि
२उ ३१ २
वि गोभिरद्रिमैरयत् ४ ८(खा)

१ २ ३ १ २र ३ १ २ ३ १ २र
८०० इन्द्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे
३ १ २र ३ १ २
धिया धेना अवस्यवः १

१ २र ३ १ २ ३ १ २र ३ १ २
८०१ ता हि शश्वन्त ईडत इत्था विप्रास ऊतये
३ २ ३ १ २
सबाधो वाजसातये २

१ २ ३ १ २३ २ ३ १ २
८०२ ता वां गीर्भिर्विपन्युवः प्रयस्वन्तो हवामहे
३ १ २ ३ १ २
मेधसाता सनिष्यवः ३ ९(हु)

इति द्वितीयः खण्डः २

१ २ ३ १२ ३१ २ ३२
८०३ वृषा पवस्व धारया मरुत्वते च मत्सरः
२ ३ १ २३ १ २
विश्वा दधान ओजसा १

१ २ ३ १२ ३ २ १ २ ३१ २
८०४ तं त्वा धर्त्तारमोण्योः पवमान स्वर्दृशम्
३ १ २र ३ १ २
हिन्वे वाजेषु वाजिनम् २

३ २ ३ २ ३ २उ ३ १ २ ३ १२
८०५ अया चित्तो विपानया हरिः पवस्व धारया
२ ३ १ २
युजं वाजेषु चोदय ३ १०(ट)

२ ३ १ २ ३ १ २ ३ २ ३१ २ ३ २ ३ २
८०६ वृषा शोणो अभिकनिक्रदद्गा नदयन्नेषि पृथिवीमुत द्याम्
१ २ ३ १ २र ३ १ २ ३ १ २ ३ २ ३ २
इन्द्रस्येव वग्नुरा शृण्व आजौ प्रचोदयन्नर्षसि वाचमेमाम् १

३ २ ३ १ २ ३ १ २ ३१ २ ३ १ २ ३ २
८०७ रसाय्यः पयसा पिन्वमान ईरयन्नेषि मधुमन्तमँशुम्
१ २ ३ १ २ ३ १ २र ३ १ २
पवमान सन्तनिमेषि कृण्वन्निन्द्राय सोम परिषिच्यमानः २

३ १ २ ३ १ २र ३ १ २ ३ १ २ ३ २
८०८ एवा पवस्व मदिरो मदायोदग्राभस्य नमयन्वधस्नुम्
२ ३ २ ३ १२ ३ १ २ ३ १ २ ३ १ २ ३ २
परि वर्णं भरमाणो रुशन्तं गव्युर्नो अर्ष परि सोम सिक्तः ३ ११(रि)

इति तृतीयः खण्डः ३

१ २र ३ १ २र ३१ २
८०९ त्वामिद्धि हवामहे सातौ वाजस्य कारवः
२ ३१ २ ३ १ २ ३ २३ २उ ३ १ २
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः १

१ २र ३ २ ३१ २ ३ १ २
८१० स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः
१ २र ३क २र ३ १ २ ३ २उ ३ २ ३ १ २
गामश्वँ रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे २ १२(फु)

३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ २
८११ अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति १

३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
८१२ शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे
३१ २ ३ १ २र ३ १ २ ३ १ २
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः २ १३(हि)

२ ३ १ २र ३ १ २
८१३ त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः
१ २ ३ १ २ ३ २ ३ २ ३ १ २३ १ २
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि १

१ २ ३ १ २ ३ १ २ ३ १ २
८१४ मत्स्वा सुशिप्रिन्हरिवस्तमीमहे त्वया भूषन्ति वेधसः
२ ३ १ २ ३ १ २ ३१ २
तव श्रवाँ स्युपमान्युक्थ्य सुतेष्विन्द्र गिर्वणः २ १४(ल)

इति चतुर्थः खण्डः ४

२ ३ २ ३ १२ ३ १ २ ३ १ २
८१५ यस्ते मदो वरेण्यस्तेना पवस्वान्धसा
३ १२ ३ २
देवावीरघशँ सहा १

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
८१६ जघ्निर्वृत्रममित्रियँ सस्निर्वाजं दिवेदिवे
१ २ ३ १ २
गोषातिरश्वसा असि २

१ २ ३ १ २ ३ १ ३ २ ३ १ २
८१७ संमिश्लो अरुषो भुवः सूपस्थाभिर्न धेनुभि
१ २ ३ २उ ३ २
सीदं च्छ्येनो न योनिमा ३ १५(चौ)

३ २ ३ २ ३ २उ ३ १ २ ३ १ २
८१८ अयं पूषा रयिर्भगः सोमः पुनानो अर्षति
२ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ २
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे १

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
८१९ समु प्रिया अनूषत गावो मदाय घृष्वयः
१ २ ३ १ २र ३ १ २
सोमासः कृणवते पथः पवमानास इन्दवः २

१ २र ३ १ २र ३ १ २ ३ १ २
८२० य ओजिष्ठस्तमा भर पवमान श्रवाय्यम्
१ २र ३ २३ २ ३ २उ ३ १ २
यः पञ्च चर्षणीरभि रयिं येन वनामहे ३ १६(फु)

१ २ ३ १ २ ३२उ ३ १ २ ३ १ २र ३ २
८२१ वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां दिवः
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्राणा सिन्धूनां कलशाँ अचिक्रददिन्द्रस्य हार्द्याविशन्मनीषिभिः १

३ १ २ ३ २ ३ १ २र ३२उ ३ १ २
८२२ मनीषिभिः पवते पूर्व्यः कविर्नृभिर्यतः परि कोशाँ असिष्यदत्
३ २ ३ १ २ ३ २ ३ २ ३ २३ १ २ ३ २ ३ १ २ ३ १ २
त्रितस्य नाम जनयन्मधु क्षरन्निन्द्रस्य वायुँ सख्याय वर्धयन् २

३ १ २ ३ २ ३ १ २ ३ १ २र ३ २
८२३ अयं पुनान उषसो अरोचयदयँ सिन्धुभ्यो अभवदु लोककृत्
३२उ ३ १ २ ३ २ ३ २३ १ २ ३ १ २ ३ १ २ ३ २
अयं त्रिः सप्त दुदुहान आशिरँ सोमो हृदे पवते चारु मत्सरः ३ १७(गी)

इति पञ्चमः खण्डः ५

३ १ २र ३ २३ १ २र ३ २ ३२
८२४ एवा ह्यसि वीरयुरेवा शूर उत स्थिरः
३ २ ३ २ ३ १ २
एवा ते राध्यं मनः १

३ २ ३ १ २ ३ १ २ ३ १ २
८२५ एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः
१ २ ३ १ २
अधा चिदिन्द्र नः सचा २

२उ ३ १ २ ३ १ २र
८२६ मो षु ब्रह्मेव तदिन्द्रयुर्भुवो वाजानां पते
१ २ ३ २ ३ १ २
मत्स्वा सुतस्य गोमतः ३ १८(ति)

२ ३ १ २ ३ १ २ ३ १२
८२७ इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः
३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् १

३ १ २ ३ २ ३ १ २
८२८ सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते
२ ३ १ २र ३ १ २३ १ २
त्वामभि प्र नोनुमो जेतारमपराजितम् २

३ १ २र ३ २ ३ १ २र ३ १ २
८२९ पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः
३ १ २र ३ १ २ ३ २ ३ १ २ ३ २
यदा वाजस्य गोमत स्तोतृभ्यो मꣳहते मघम् ३ १९(ली)

इति षष्ठः खण्डः ६ इति द्वितीयप्रपाठके प्रथमोऽर्धः २

इति तृतीयोऽध्यायः ३

अथ चतुर्थोऽध्यायः

अथ द्वितीयप्रपाठके द्वितीयोऽर्धः २

(१-१९) १ जमदग्निर्भार्गवः २ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा ३ कविर्भार्गवः ४ कश्यपो मारीचः ५ मेधातिथिः काण्वः ६-७ मधुच्छन्दा वैश्वामित्रः ८ भरद्वाजो बार्हस्पत्यः ९ सप्तर्षयः १० पराशरः शाक्त्यः ११ पुरुहन्मा आङ्गिरसः १२

मेध्यातिथि कारावः १३ वसिष्ठो मैत्रावरुणिः १४ त्रित आप्त्यः १५ यथातिर्नाहुषः १६ पवित्र आंगिरसः १७ सोभरिः कारावः १८ गोषूक्त्यश्वसूक्तिनौ कारावायनौ १९ तिरश्चीरांगिरसौ ॥ १-४, ६, १०, १४-१६ पवमानः सोमः ५, १७ अग्निः ६ मित्रावरुणौ ७ मरुतः ७ (१,३) इन्द्रश्च ८ इन्द्राग्नी ११-१३, १८-१९ इन्द्रः ॥ १-८, १४ गायत्री ९ (३) द्विपदा विराट् १० त्रिष्टुप् ९ (१-२), ११, १३ प्रगाथः १२ बृहती १५, १९ अनुष्टुप् १६ जगती १७ प्रगाथः १८ उष्णिक् ॥

३१ २ ३ १ २ ३२ ३ १२ ३ १ २
८३० एत असृग्रमिन्दवस्तिरः पवित्रमाशवः
१ २ ३ १ २र
विश्वान्यभि सौभगा १

३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
८३१ विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः
१ २ ३ २ ३ १ २
त्मना कृरावन्तो अर्वतः २

३ २ ३ १ २ ३ २३क २र ३ २
८३२ कृरावन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम्
१ २ ३ १ २ ३ १ २
इडामस्मभ्यँ संयतम् ३ १(या)

१ २ ३ १ २ ३ १ २ ३ १ २र
८३३ राजा मेधाभिरीयते पवमानो मनावधि
३ १ २ ३ १ २
अन्तरिक्षेण यातवे १

१ २ ३ २ ३ १ २ ३ १ २र
८३४ आ नः सोम सहो जुवो रूपं न वर्चसे भर
३ २ ३ १ २
सुष्वाणो देववीतये २

१ २ ३ २ ३ २ ३ २ ३ १ २
८३५ आ न इन्दो शातग्विनं गवां पोषँ स्वश्व्यम्
२ ३ १ २ ३ १ २
वहा भगत्तिमूतये ३ २(ला)

१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २
८३६ तं त्वा नृम्णानि बिभ्रतँ सधस्थेषु महो दिवः

१ २ ३ १ २
चारुँ सुकृत्ययेमहे १

१ २ ३क २र ३ १ २ ३ १ २
८३७ संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदम्
३ १ २र ३ १ २
शतं पुरो रुरुक्षणिम् २

१ २ ३२ ३क २र ३ १ २ ३ २
८३८ अतस्त्वा रयिरभ्ययद्राजानँसुक्रतो दिवः
३ १ २ ३ १ २
सुपर्णो अव्यथी भरत् ३

१ २ ३ १ २ ३ १ २र ३ १ २
८३९ अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे
३ १ २र
अभिष्टिकृद्विचर्षणिः ४

१ २ ३ १ २ ३ १ २र ३ १२
८४० विश्वस्मा इ स्वर्दृशे साधारणँ रजस्तुरम्
३ २ ३ २ ३ १ २
गोपामृतस्य विर्भरत् ५ ३(हू)

३ १ २ ३ १२ ३ १ २ ३ १ २
८४१ इषे पवस्व धारया मृज्यमानो मनीषिभिः
१ २ ३ १ २२
इन्दो रुचाभि गा इहि १

३ १ २र ३ २ ३ १ २
८४२ पुनानो वरिवस्कृध्यूर्जं जनाय गिर्वणः
१२ ३ २ ३ १२
हरे सृजान आशिरम् २

३ २ ३ १ २ ३ १ २ ३ २
८४३ पुनानो देववीतय इन्द्रस्य याहि निष्कृतम्
३ २ ३ १ २ ३ २
द्युतानो वाजिभिर्हितः ३ ४(या)

इति प्रथमः खण्डः १

३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
८४४ अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा
३ २ ३क २र
हव्यवाड्जुह्वास्यः १

१ २र ३ १ २ ३१ २ ३ १ २
८४५ यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति
१ २ ३ १ २
तस्य स्म प्राविता भव २

२ ३ २ ३ १ २ ३ १ २ ३ १ २
८४६ यो अग्निं देववीतये हविष्माँ आविवासति
१ २
तस्मै पावक मृडय ३ ५(रि)

३ १ २ ३ १ २ ३ १ २ ३ १ २
८४७ मित्रँहुवे पूतदक्षं वरुणं च रिशादसम्
१ २ ३ २ ३ १ २
धियं घृताचीँसाधन्ता १

३ १ २
८४८ ऋतेन मित्रावरुणावृतावृधावृतस्पृशा
१ २ ३ १ २
क्रतुं बृहन्तमाशाथे २

३ १ २ ३ १ २र ३ १ २ ३ १ २
८४९ कवी नो मित्रावरुणा तुविजाता उरुक्षया
१ २ ३ १ २
दक्षं दधाते अपसम् ३ ६(व)

१ २ ३ १ २र ३ १ २र
८५० इन्द्रेण सँहि दृक्षसे संजग्मानो अबिभ्युषा
३ १ २ ३ १ २
मन्दू समानवर्चसा १

१ २र ३ २उ ३ १ २ ३ १ २ ३ २
८५१ आदह स्वधामनु पुनर्गर्भत्वमेरिरे
१ २ ३ १ २ ३ १ २
दधाना नाम यज्ञियम् २

३ १ २ ३ ३ १ २ ३ १ २
८५२ वीडु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः
१ २ ३ २ ३ १ २
अविन्द उस्त्रिया अनु ३ ७(ति)

१ २३ १ २३२ ३१ २र ३ २ ३ २
८५३ ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम्
३ १ २र
इन्द्राग्नी न मर्धतः १

३ १ २३ २ ३ १ २ ३ १ २
८५४ उग्रा विघनिना मृध इन्द्राग्नी हवामहे
१ २ ३ १ २
ता नो मृडात ईदृशे २

३ २ ३ १ २र ३ १ २र
८५५ हथो वृत्राण्यार्या हथो दासानि सत्पती
३ २उ ३ २३ १ २
हथो विश्वा अप द्विषः ३ ८(पी)

इति द्वितीयः खण्डः २

३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
८५६ अभि सोमास आयवः पवन्ते मद्यं मदम्
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः १

१ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ २ ३ २
८५७ तरत्समुद्रं पवमान ऊर्मिणा राजा देव ऋतं बृहत्
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २
अर्षा मित्रस्य वरुणस्य धर्मणा प्र हिन्वान ऋतं बृहत् २

१ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २३क २र
८५८ नृभिर्येमाणो हर्यतो विचक्षणो राजा देवः समुद्र्यः ३ ९(वु)

३ १ २र ३ १ २र ३ १ २ ३ १ २र ३ २
८५९ तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम्
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः १

२ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
८६० सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
सोमः सुत ऋच्यते पवमानः सोमे अर्कास्त्रिष्टुभः सं नवन्ते २

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
८६१ एवा नः सोम परिषिच्यमान आ पवस्व पूयमानः स्वस्ति

२ ३ १ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ १२
इन्द्रमा विश बृहता मदेन वर्धया वाचं जनया पुरन्धिम् ३ १०(पी)

इति तृतीयः खराडः ३

१ २र ३ २ ३ १ २र ३
८६२ यद्याव इन्द्र ते शतँ्शतं भूमीरुत स्युः
१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
न त्वा वज्रिन्त्सहस्रँ्सूर्या अनु न जातमष्ट रोदसी १

१ २ ३ १ २र ३ १ २ ३ १ २
८६३ आ पप्राथ महिना वृष्णया वृषन्विश्वा शविष्ठ शवसा
३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
अस्माँ्अव मघवन्गोमति व्रजे वज्रिञ्चित्राभिरुतिभिः २ ११(ली)

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
८६४ वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः
३ १ २ ३ १ २ ३ १ २ ३ १२
पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते १

१२ ३२उ ३ १ २ ३ २ ३ १ २
८६५ स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः
३ २ ३ १ २ ३२उ ३ १ २ ३ १ २ ३ २ ३ १ २
कदा सुतं तृषाण ओक आ गमदिन्द्र स्वब्दीव वँ्सगः २

१ २ ३ २ ३१ २र ३ १ २
८६६ करावेभिर्धृष्णवा धृषद्वाजं दर्षि सहस्त्रिणम्
३ १ २ ३ १ २र
पिशङ्गरूपं मघवन्विचर्षणे मक्षू गोमन्तमीमहे ३ १२(छा)

३२ ३ १ २ ३ २ ३ १२ ३ २
८६७ तरणिरित्सिषासति वाजं पुरन्ध्या युजा
२ ३ १ २ ३१ २ ३ २ ३ १ २र ३ १ २
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् १

१ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
८६८ न दुष्टुतिर्द्रविणोदेषु शस्यते न स्रेधन्तँ् रयिर्नशत्
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २र ३ २
सुशक्तिरिन्मघवं तुभ्यं मावते देष्णं यत्पार्ये दिवि २ १३(यि)

इति चतुर्थः खराडः ४

३ २उ ३ १ २ ३ १ २ ३ १ २
८६९ तिस्रो वाच उदीरते गावो मिमन्ति धेनवः
१ २ ३ १ २
हरिरेति कनिक्रदत् १

३ १ २र ३ २ ३१ २ ३१२
८७० अभि ब्रह्मीरनूषत यह्वीर्ऋतस्य मातरः
३ १ २ ३ १ २र
मर्जयन्तीर्दिवः शिशुम् २

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
८७१ रायः समुद्राँश्चतुरोऽस्मभ्यँ सोम विश्वतः
१ २ ३ १ २
आ पवस्व सहस्रिणः ३ १४(टा)

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
८७२ सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः
३ १ २ ३ १ २ ३ १ २
पवित्रवन्तो अक्षरं देवान्गच्छन्तु वो मदाः १

२ ३ १ २ ३ १ २ ३ १ २
८७३ इन्दुरिन्द्राय पवत इति देवासो अब्रुवन्
३ १ २र ३ २ ३ १ २ ३ १ २
वाचस्पतिर्मखस्यते विश्वस्येशान ओजसः २

३ १ २ ३ १ २ ३ २
८७४ सहस्रधारः पवते समुद्रो वाचमीङ्खयः
२ ३ १ २ ३ १ २र ३ १ २
सोमस्पती रयीणाँसखेन्द्रस्य दिवेदिवे ३ १५(लि)

३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
८७५ पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः
१ २ ३२उ ३ १ २ ३ २ ३ १ २र ३ १ २र
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सं तदाशत १

१ २ ३ २३ १ २ ३ २ ३ १ २ ३ १ २ ३क २र
८७६ तपोष्पवित्रं विततं दिवस्पदेऽर्चन्तो अस्य तन्तवो व्यस्थिरन्
१ २ ३ १२ ३ १ २ ३ २ ३ १ २र ३ १ २
अवन्त्यस्य पवितारमाशवो दिवः पृष्ठमधि रोहन्ति तेजसा २

१ २ ३ २ ३ १ २३ २ ३ १ २ ३ १ २ ३ २
८७७ अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः

३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा दधुः ३ १६(टु)

इति पञ्चमः खण्डः ५

१ २र ३ १ २ ३ २ ३ १ २
८७८ प्र मँहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे
३ १ २ ३ १ २
उपस्तुतासो अग्नये १

१ २ ३ १ २ ३२ ३ २ ३ १ २ ३ १ २
८७९ आ वँसते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः
३ १ २ ३ १ २र ३ २ ३ १ २ ३ १ २
कुविन्नो अस्य सुमतिर्भवीयस्यच्छा वाजेभिरागमत् २ १७(या)

२ ३ १ २ ३ १ २ ३ १ २ ३ २
८८० तं ते मदं गृणीमसि वृषणं पृक्षु सासहिम्
३ १ २ ३ १ २
उ लोककृत्नुमद्रिवो हरिश्रियम् १

२ ३ १ २ ३ २ ३ १ २ ३ १ २
८८१ येन ज्योतीँष्यायवे मनवे च विवेदिथ
३ २ ३ २ ३ २ ३ १ २
मन्दानो अस्य बर्हिषो वि राजसि २

२ २ १ २ ३ १ २र ३ १ २
८८२ तदद्या चित्त उक्थिनोऽनु ष्टुवन्ति पूर्वथा
१ २ ३ १ २ ३ १ २
वृषपत्नीरपो जया दिवेदिवे ३ १८(ह)

३ १ २र ३ २उ ३ १ २ ३ १ २
८८३ श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति
३ १ २ ३ १ २ ३ १ २ ३ १ २
सुवीर्यस्य गोमतो रायस्पूर्धि महाँअसि १

१ २ ३ १ २ ३ १२ ३ १ २र
८८४ यस्त इन्द्र नवीयसीं गिरं मन्द्रामजीजनत्
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
चिकित्विन्मनसं धियं प्रत्नामृतस्य पिप्युषीम् २

१ २ ३ २उ ३ १ २ ३ १ २ ३ २
८८५ तमु ष्टवाम यं गिर इन्द्रमुक्थानि वावृधुः

३ १ २ ३ २ ३ १ २
पुरूरयस्य पौँस्या सिषासन्तो वनामहे ३ १९(फा)

इति षष्ठः खरडः ६

इति द्वितीयप्रपाठके द्वितीयोऽर्धः द्वितीयप्रपाठकश्च समाप्तः २

इति चतुर्थोऽध्यायः ४

अथ पञ्चमोऽध्यायः

अथ तृतीयप्रपाठके प्रथमोऽर्धः ३

(१-२२) १ अकृष्टा माषाः २ अमहीयुराङ्गिरसः ३ मेध्यातिथिः कारवः ४, १२ बृहन्मतिराङ्गिरसः ५ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा ६ सुतंभर आत्रेयः ७ गृत्समदः शौनकः ८, २१ गोतमो राहूगणः ९, १३ वसिष्ठो मैत्रावरुणिः १० हृढच्युत आगस्त्यः ११ सप्तर्षयः १४ रेभः काश्यपः १५ पुरुहन्मा आङ्गिरसः १६ असितः काश्यपो देवलो वा १७ (१) शक्तिर्वासिष्ठः १७ (२) उरुरांगिरसः १८ अग्निश्चाक्षुषः १९ प्रतर्दनो दैवोदासिः २० प्रयोगो भार्गवः २१ पावकोऽग्निर्बार्हस्पत्यो वा, गृहपतियविष्ठौ सहसः पुत्रावन्यतरो वा २२ ॥ १-५, १०-१२, १६-१९ पवमानः सोमः ६, २० अग्निः ७ मित्रावरुणौ ८, १३-१५, २१ इन्द्रः ९ इन्द्राग्नी २२ ॥ १, ६ जगती २-५, ७-१०, १२, १६, २० गायत्री ११, १५ प्रगाथः १३ विराट् १४ (१) अति जगती १४ (२-३) उपरिष्टाद् बृहती १७ काकुभः प्रगाथः १८ उष्णिक् १९ त्रिष्टुप् २१ अनुष्टुप् ॥

२ ३ १ २ ३१ २ ३ १ २ ३ १ २ ३ १ २
८८६ प्र त आश्विनीः पवमान धेनवो दिव्या असृग्रन्पयसा धरीमणि
१ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रान्तरिक्षात्स्थाविरीस्ते असृक्षत ये त्वा मृजन्त्यृषिषाण वेधसः १

३ २३ १ २ ३ १ २ ३१ २ ३१ २र ३ १ २
८८७ उभयतः पवमानस्य रश्मयो ध्रुवस्य सतः परि यन्ति केतवः
१ २ ३ २३ १ २ ३ २३ २३ २ ३ १ २र ३ १ २
यदी पवित्रे अधि मृज्यते हरिः सत्ता नि योनौ कलशेषु सीदति २

२ ३ १ २ ३ १ २ ३ १ २ ३१ २र ३ १ २
८८८ विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोष्टे सतः परि यन्ति केतवः

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
व्यानशी पवसे सोम धर्मणा पतिर्विश्वस्य भुवनस्य राजसि ३ १(वी)

१ २ ३ २ ३ १ २र ३ २
८८९ पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम्
१ २ ३२ ३ २
ज्योतिर्वैश्वानरं बृहत् १

१ २ ३ २ ३ २ ३ १ २ ३ २
८९० पवमान रसस्तव मदो राजन्नदुच्छुनः
२उ ३ १ २
वि वारमव्यमर्षति २

१ २ ३ २ ३ २ ३ १ २ ३ २
८९१ पवमानस्य ते रसो दक्षो वि राजति द्युमान्
२ ३ २३क २र ३ २
ज्योतिर्विश्वँ स्वर्दृशे ३ २(पा)

२उ ३ १ २र ३ २ ३ २ ३ १ २
८९२ प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः
१ २ ३ २उ ३ १ २
घ्नन्तः कृष्णामप त्वचम् १

३ १ २ ३ २ ३ १ २ ३क २र
८९३ सुवितस्य मनामहेऽति सेतुं दुराव्यम्
३ २ ३ १ २ ३
साह्याम दस्युमव्रतम् २

३ २ ३ १ २ ३ १ २र ३ १ २
८९४ शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः
१ २ ३ १ २ ३ २
चरन्ति विद्युतो दिवि ३

१ २ ३ २उ ३ १ २ ३ १ २
८९५ आ पवस्व महीमिषं गोमदिन्दो हिरण्यवत्
१ २ ३ १ २
अश्ववत्सोम वीरवत् ४

१ २ ३ २ ३ १ २र
८९६ पवस्व विश्वचर्षण आ मही रोदसी पृण
३ २उ ३ २ ३ १ २
उषाः सूर्यो न रश्मिभिः ५

१ २ ३ २ ३ १२ ३ १ २
८९७ परि णः शर्मयन्त्या धारया सोम विश्वतः
१ २ ३ १ २ ३ १ २
सरा रसेव विष्टपम् ६ ३(भी)

इति प्रथमः खण्डः १

३ १२ ३ १ २ ३ २ ३ १ २
८९८ आशुरर्ष बृहन्मते परि प्रियेण धाम्ना
१ २ ३ २उ ३ १ २
यत्रा देवा इति ब्रुवन् १

३ १ २र ३ १ २ ३ २ ३ १ २
८९९ परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः
३ २ ३ १ २र
वृष्टिं दिवः परि स्रव २

३२उ ३ १ २र ३ १ ३ २ ३ २
९०० अयँ स यो दिवस्परि रघुयामा पवित्र आ
१ २ ३ १ २र
सिन्धोरूर्मा व्यक्षरत् ३

३ १ २ ३ २ ३ २उ ३ १ २ ३ १ २
९०१ सुत एति पवित्र आ त्विषिं दधान ओजसा
३ १ २ ३ १ २
विचक्षाणो विरोचयन् ४

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
९०२ आविवासन्परावतो अथो अर्वावतः सुतः
१ २ ३ १ २
इन्द्राय सिच्यते मधु ५

३ १ २ ३ १ २ ३ १ २
९०३ समीचीना अनूषत हरिँहिन्वन्त्यद्रिभिः
२ ३ १ २ ३ १ २
इन्दुमिन्द्राय पीतये ६ ४(जी)

३ २ ३ २३ १ २ ३ १ ३ २ ३ १ २
९०४ हिन्वन्ति सूरमुस्रयः स्वसारो जामयस्पतिम्
३ १ २र ३ १ २
महामिन्दुं महीयुवः १

१ २ ३ १२ ३ १ २ ३१ २ ३२
९०५ पवमान रुचारुचा देवो देवेभ्यः सुतः
२ ३ २३ १ २
विश्वा वसून्या विश २

१ २ ३ २ ३ २ ३२ ३ १ २
९०६ आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः
३ १ २ ३ १ २
इषे पवस्व संयतम् ३ ५(ह)

इति द्वितीयः खराडः २

१२ ३ १ २ ३ १ २ ३ २ ३१ २ ३ २३ १ २
९०७ जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे
३१२ ३ १ २ ३ १ २ ३१ २र ३ २ ३ १ २
घृतप्रतीको बृहता दिविस्पृषा द्युमद्वि भाति भरतेभ्यः शुचिः १

१ २ ३ १ २ ३ १ २ ३१ २र ३ १ २र
९०८ त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने
१ २ ३ १ २३ १ २ ३१ २र ३ १ २ ३१ २
स जायसे मथ्यमानः सहो महत्वामाहुः सहसस्पुत्रमङ्गिरः २

३ १ २ ३१ २ ३ २ ३ १ २ ३ १ २र ३ १ २र
९०९ यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिन्धते
१ २ ३ २ ३२ ३ २ ३ २ ३ २ ३ १ २र ३ १ २ ३ १ २
इन्द्रेण देवैः सरथँस बर्हिषि सीदन्नि होता यजथाय सुक्रतुः ३ ६(वे)

३ १ २ ३ १ २र
९१० अयं वां मित्रावरुणा सुतः सोम ऋतावृधा
२उ ३ १ २ ३ १ २
ममेदिह श्रुतँहवम् १

१ २ ३ १ २ ३ १ २र ३ २
९११ राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे
३ १ २
सहस्रस्थूण आशाते २

२ ३ १ २ ३ १ २ ३ १ २र ३ १ २
९१२ ता सम्राजा घृतासुती आदित्या दानुनस्पती
१ २३ १ २
सचेते अनवह्वरम् ३ ७(पि)

१ २ ३ २ ३ १ २ ३ १ २र
६१३ इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः
३ १ २ ३ १ २र
जघान नवतीर्नव १

३ १ २र ३ २उ ३ १ २ ३ १ २
६१४ इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम्
१ २ ३ १ २
तद्विदच्छर्यणावति २

२उ ३ १ २ ३ २ ३ १ २ ३क २र
६१५ अत्राह गोरमन्वत नाम त्वष्टरपीच्यम्
३ २ ३ १ २ ३ २
इत्था चन्द्रमसो गृहे ३ ८(ठी)

३ १ २ ३ १ २र ३ १ २ ३ १ २
६१६ इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः
३ २ ३ १ २
अभ्राद्वृष्टिरिवाजनि १

३ १ २ ३२उ ३ १ २ ३ १ २ ३ २
६१७ शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः
३ १ २ ३ १ २
ईशाना पिप्यतं धियः २

१ २ ३ १ २ ३१ २ ३ १ २र
६१८ मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये
१ २ ३ २
मा नो रीरधतं निदे ३ ९(चा)

इति तृतीयः खण्डः ३

१ २ ३ १ २ ३ १ २ ३ १ २
६१९ पवस्व दक्षसाधनो देवेभ्यः पीतये हरे
३ १ २ ३ २ ३ १ २
मरुद्भ्यो वायवे मदः १

२ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ २
६२० सं देवैः शोभते वृषा कविर्योनावधि प्रियः
१ २ ३ १ २
पवमानो अदाभ्यः २

१ २ ३ २ ३ १ २उ ३ १ २
९२१ पवमान धिया हितो३ऽभि योनिं कनिक्रदत्
१ २ ३ २ २र
धर्मणा वायुमारुहः ३ १०(ख)

२ ३१ २ ३ १ २ ३ १ २
९२२ तवाहॅंसोम रारण सख्य इन्दो दिवेदिवे
३ २ ३ १ २ ३ १ २र ३ २उ ३ १ २
पुरूणि बभ्रो नि चरन्ति मामव परिधीॅं रति ताॅंइहि १

२ ३१ २र ३१ २ ३ १ २ ३ १ २३ १ २
९२३ तवाहं नक्तमुत सोम ते दिवा दुहानो बभ्र ऊधनि
३ १ २र ३ २ ३ १ २ ३१ २ ३ १ २
घृणा तपन्तमति सूर्यं परः शकुना इव पप्तिम २ ११(ति)

३ १ २ ३ २उ ३ २ ३ १ २
९२४ पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः
३ २ ३ १ २ ३ १ २
शुम्भन्ति विप्रं धीतिभिः १

१ २र ३ १ २ ३ २ ३ २ ३ १ २ ३ २
९२५ आ योनिमरुणो रुहद्गमदिन्द्रो वृषा सुतम्
३ १ २र
ध्रुवे सदसि सीदतु २

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
९२६ नू नो रयिं महामिन्दोऽस्मभ्यॅं सोम विश्वतः
१ २ ३ १ २
आ पवस्व सहस्रिणम् ३ १२(चा)

इति चतुर्थः खण्डः ४

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
९२७ पिबा सोममिन्द्र मदन्तु त्वा यं ते सुषाव हर्यश्वाद्रिः
३ २ ३ २ ३ १ २ ३ १ २
सोतुर्बाहुभ्याॅं सुयतो नार्वा १

२ ३ २ ३ २ ३ २३२ ३ १२ ३ १ २ ३ १ २
९२८ यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हॅंसि
१ २र
स त्वामिन्द्र प्रभूवसो ममत्तु २

२ ३ १ २ ३ २ ३२उ ३ १ २ ३ १ २ ३ १ २
६२९ बोधा सु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम्
३ १ २र ३ १ २
इमा ब्रह्म सधमादे जुषस्व ३ १३(चा)

२ ३ १ २ ३ १ २३ १२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
६३० विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे
२ ३ १२ ३ २ ३ १ २ ३ १ २र ३१ २ ३ १ २
क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् १

३ १ २ ३ १ २ ३ १ २र ३ २
६३१ नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरे
३ १ २ ३२उ ३ १ २ ३ २ ३ १ २र
सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः २

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
६३२ समु रेभासो अस्वरन्निन्द्रꣳ सोमस्य पीतये
२र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
स्वःपतिर्यदी वृधे धृतव्रतो ह्योजसा समूतिभिः ३ १४(ची)

१ २र ३ २उ ३ १ २ ३१ २
६३३ यो राजा चर्षणीनां याता रथेभिरध्रिगुः
१ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ २
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे १

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
६३४ इन्द्रं तꣳ शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्तरि
१ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २र
हस्तेन वज्रः प्रति धायि दर्शतो महां देवो न सूर्यः २ १५(चि)

इति पञ्चमः खण्डः ५

१ २ ३ २ ३ २ ३ १ २र ३क २र ३ २
६३५ परि प्रिया दिवः कविर्वयाꣳसि नप्त्योर्हितः
३ १ २ ३ १ २
स्वानैर्याति कविक्रतुः १

२ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
६३६ स सूनुर्मातरा शुचिर्जातो जाते अरोचयत्
३ २ ३ १ २ ३ १ २
महान्मही ऋतावृधा २

२३ १ २३ १ २३ १ २३ १ २ ३१२
९३७ प्रप्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः
३क २र ३ १ २
वीत्यर्ष पनिष्टये ३ १६(रि)

२ क ऽ १ २ ३ १ २ ३ १ २ ३ १ २
९३८ त्वँ ह्या३ँङ्ग दैव्या पवमान जनिमानि द्युमत्तमः
३ १ २ ३ १ २
अमृतत्वाय घोषयन् १

२ ३ १ २ ३ १ २ ३२उ ३ १ २ ३२
९३९ येना नवग्वो दध्यङ्ङपोर्णुते येन विप्रास आपिरे
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २३ २ ३ १ २
देवानाँ सुम्ने अमृतस्य चारुणो येन श्रवाँस्याशत २ १७(पौ)

१ २ ३ २ ३ २उ ३ २३ १ २
९४० सोमः पुनान ऊर्मिणाव्यं वारं वि धावति
१ २ ३ १ २र ३ १ २
अग्रे वाचः पवमानः कनिक्रदत् १

३ १ २ ३ २३ २३ १ २ ३ १ २
९४१ धीभिर्मृजन्ति वाजिनं वने क्रीडन्तमत्यविम्
३ १ २ ३ २ ३ २ ३ १ २
अभि त्रिपृष्ठं मतयः समस्वरन् २

१ २ ३ १ २ ३ २ ३ २उ ३ १ २ ३ २
९४२ असर्जि कलशाँ अभि मीढ्वान्त्सप्तिर्न वाजयुः
३ १ २र ३ १ २
पुनानो वाचं जनयन्नसिष्यदत् ३ १८(फा)

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
९४३ सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः
३ १ २र ३ १ २र ३ १ २ ३ १ २र
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः १

३ २ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ २ ३ १ २
९४४ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
श्येनो गृध्राणाँ स्वधितिर्वनानाँ सोमः पवित्रमत्येति रेभन् २

१ २ ३ २ ३ २उ ३ २ ३ २ ३ १ २ ३ २
९४५ प्रावीविपद्वाच ऊर्मिं न सिन्धुर्गिर स्तोमान्पवमानो मनीषाः
३ १ २र ३ २३ १ २३ १ २ ३ १ २र १ २
अन्तः पश्यन्वृजनेमावराण्या तिष्ठति वृषभो गोषु जानन् ३ १९(फौ)

इति षष्ठः खण्डः ६

३ १ २ ३ १ २ ३ १ २ ३ १ २
९४६ अग्निं वो वृधन्तमध्वराणां पुरूतमम्
२ ३ २ ३ १ २
अच्छा नप्त्रे सहस्वते १

३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
९४७ अयं यथा न आभुवत्त्वष्टा रूपेव तक्ष्या
३ २उ ३ १ २
अस्य क्रत्वा यशस्वतः २

३ १ २र ३ २उ ३ २ ३ १ २
९४८ अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते
२उ ३ १ २
आ वाजैरुप नो गमत् ३ २०(डा)

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
९४९ इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम्
३ १ २ ३क २र ३ १ २ ३ २ ३ १ २
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने १

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
९५० न किष्ट्वद्रथीतरो हरी यदिन्द्र यच्छसे
२ ३ १ २ ३ २ ३ २ ३ १ २
न किष्ट्वानु मज्मना न किः स्वश्व आनशे २

१ २ ३ १ २ ३ १ २
९५१ इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन
३ १ २ ३ १ २ ३ १ २ ३ १ २
सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः ३ २१(र)

१ २ ३ २ ३ २ ३ १ २ ३ १ २
९५२ इन्द्र जुषस्व प्र वहा याहि शूर हरिह
१ २ ३ १ २ ३ १ २र ३२उ ३ १ २
पिबा सुतस्य मतिर्न मधोश्चकानश्चारुर्मदाय १

१ २ ३ २३ २ ३ २ ३ २ ३ १ २ ३ २
९५३ इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न
३ २ ३ २ ३ २उ १ २ ३ १ २ ३ १ २
अस्य सुतस्य स्वा३र्णोप त्वा मदाः सुवाचो अस्थुः २

१ २ ३ २ ३ २उ ३ १ २ ३२उ ३ २
९५४ इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न
३ १ २ ३ २उ ३ १ २ ३२उ ३ २ ३ १ २
बिभेद वलं भृगुर्न ससाहे शत्रून्मदे सोमस्य ३ २२(ङ)

इति सप्तमः खण्डः ७

इति तृतीयप्रपाठके प्रथमोऽर्धः ३

इति पञ्चमोऽध्यायः ५

अथ षष्ठोऽध्यायः

अथ तृतीयप्रपाठके द्वितीयोऽर्धः

(१-२३) १ त्रयः ऋषयः २ कश्यपो मारीचः ३, ४, १३ असितः काश्यपो देवलो वा ५ अवत्सारः काश्यपः ६, १६ जमदग्निर्भार्गवः ७ अरुणो वैतहव्यः ८ उरुचक्रिरात्रेयः ९ कुरुसुतिः काण्वः १० भरद्वाजो बार्हस्पत्यः ११ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा १२ सप्तर्षयः १४, १५, २३ गोतमो राहूगणः १७ (१) ऊर्ध्वसद्मा आङ्गिरसः १७ (२) कृतयशा आङ्गिरसः १८ त्रित आप्त्यः १९ रेभसूनू काश्यपौ २० मन्युर्वासिष्ठः २१ वसुश्रुत आत्रेयः २२ नृमेध आङ्गिरसः ॥ १-६, ११-१३, १६-२० पवमानः सोमः ७, २१ अग्निः ८ मित्रावरुणौ ९, १४-१५, २२-२३ इन्द्रः १० इंद्राग्नी ॥ १, ७ जगती २-६, ८-११, १३, १६ गायत्री १२ बृहती १४, १५, २१ पंक्तिः १७ काकुभः प्रगाथः १८, २२ उष्णिक् १९, २३ अनुष्टुप् २० त्रिष्टुप् ॥

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २३ १ २
९५५ गोवित्पवस्व वसुविद्धिरण्यविद्रेतोधा इन्दो भुवनेष्वर्पितः
२ ३ १ २ ३ २उ ३ २३ १ २ ३१ २र
त्वँ सुवीरो असि सोम विश्ववित्तं त्वा नर उप गिरेम आसते १

२ ३ १ २ ३ २ ३ १ २ ३ १ २र
९५६ त्वं नृचक्षा असि सोम विश्वतः पवमान वृषभ ता वि धावसि

१ २ ३ १ २ ३ १२ ३ १ २ ३ १ २ ३ १ २
स नः पवस्व वसुमद्धिरण्यवद्वयँ स्याम भुवनेषु जीवसे २

३ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २ ३क २र
९५७ ईशान इमा भुवनानि ईयसे युजान इन्दो हरितः सुपर्ण्यः
१ २ ३ १ २ ३२उ ३ १ २ ३१ २ ३ १ २
तास्ते क्षरन्तु मधुमद्धृतं पयस्तव व्रते सोम तिष्ठन्तु कृष्टयः ३ १(खी)

१ २ ३ २ ३ १ २
९५८ पवमानस्य विश्ववित्प्र ते सर्गा असृक्षत
१ २ ३ २ ३ १ २
सूर्यस्येव न रश्मयः १

३ २ ३ २ ३२उ ३ १ २ ३ १ २
९५९ केतुं कृण्वं दिवस्परि विश्वा रूपाभ्यर्षसि
३ १ २
समुद्रः सोम पिन्वसे २

३ १ २र ३ १ २ ३ १ २
९६० जज्ञानो वाचमिष्यसि पवमान विधर्मणि
१ ३ १ २र
क्रन्दं देवो न सूर्यः ३ २(पा)

१ २र ३ १ २ ३ १ २
९६१ प्र सोमासो अधन्विषुः पवमानास इन्दवः
३ २ ३ १ २
श्रीणाना अप्सु वृञ्जते १

३ १ २र ३ २ ३ २ ३ १ २ ३ २
९६२ अभि गावो अधन्विषुरापो न प्रवता यतीः
३ १ २र
पुनाना इन्द्रमाशत २

१ २ ३ १ २र ३ १ २
९६३ प्र पवमान धन्वसि सोमेन्द्राय मादनः
१ २ ३ १ २र
नृभिर्यतो वि नीयसे ३

२ ३ १ २र ३ २ ३ १ २ ३ १ २
९६४ इन्दो यदद्रिभिः सुतः पवित्रं परिदीयसे
२३ १ २ ३ १ २
अरमिन्द्रस्य धाम्ने ४

१ २ ३ १ २ ३ १ २ ३ १ २
९६५ त्वँ सोम नृमादनः पवस्व चर्षणीधृतिः
२ ३ १ २ ३ १ २
सस्निर्यो अनुमाद्यः ५

१ २ ३ १ २ ३ १ २ ३ १ २
९६६ पवस्व वृत्रहन्तम उक्थेभिरनुमाद्यः
१ २ ३ १ २र
शुचिः पावको अद्भुतः ६

१ २ ३ १ २ ३ १ २ ३ १ २र
९६७ शुचिः पावक उच्यते सोमः सुतः स मधुमान्
३ १ २ ३ २
देवावीरघशँसहा ७ ३(है)

इति प्रथमः खण्डः १

२ ३ २ ३ १ २ ३ २ ३ १ २
९६८ प्र कविर्देववीतयेऽव्या वारेभिरव्यत
३ १ २र ३ १ २र
साह्वान्विश्वा अभि स्पृधः १

१ २र ३ २ ३ २उ ३ १ २ ३ १ २
९६९ स हि ष्मा जरितृभ्य आ वाजं गोमन्तमिन्वति
१ २ ३ १ २
पवमानः सहस्त्रिणम् २

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १
९७० परि विश्वानि चेतसा मृज्यसे पवसे मती
१ २ ३ १ २
स नः सोम श्रवो विदः ३

३क २र ३ १ २र ३ १ २ ३ २ ३ २
९७१ अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवँ रयिम्
१ २ ३ २ ३ १ २
इषँ स्तोतृभ्य आ भर ४

१ २र ३ १ २र ३ १ २
९७२ त्वँ राजेव सुव्रतो गिरः सोमाविवेशिथ
३ १ २
पुनानो वह्ने अद्भुत ५

१ २र३ २ ३ १ २ ३ १ २ ३ १ २
९७३ स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः
१ २ ३ १ २
सोमश्चमूषु सीदति ६

३ २ ३ १ २र ३ २ ३ १ २
९७४ क्रीडुर्मखो न मँहयुः पवित्रँ सोम गच्छसि
१ २ ३ २ ३ १ २
दधत्स्तोत्रे सुवीर्यम् ७ ४(को)

१ २ ३ १ २ ३ १ २ ३ १ २
९७५ यवंयवं नो अन्धसा पुष्टंपुष्टं परि स्रव
१ २ ३ १ २
विश्वा च सोम सौभगा १

२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २र
९७६ इन्दो यथा तव स्तवो यथा ते जातमन्धसः
२ ३ १ २ ३ १ २
नि बर्हिषि प्रिये सदः २

३ १ २ ३ १ २ ३ १ २र ३ १ २
९७७ उत नो गोविदश्ववित्पवस्व सोमान्धसा
३ १ २ ३ १ २
मक्षूतमेभिरहभिः ३

२ ३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
९७८ यो जिनाति न जीयते हन्ति शत्रुमभीत्य
१ २
स पवस्व सहस्रजित् ४ ५(हि)

२ ३ १ २ ३ १ २र ३ १ २
९७९ यास्ते धारा मधुश्चुतोऽसृग्रमिन्द ऊतये
१ २ ३ २३ १ २
ताभिः पवित्रमासदः १

२ ३ १ २ ३ १ २ ३ १ २र ३ १ २
९८० सो अर्षेन्द्राय पीतये तिरो वाराण्यव्यया
१ २ ३ २ ३ २ ३ २
सीदन्नृतस्य योनिमा २

९८१ त्वँसोम परि स्रव स्वादिष्ठो अङ्गिरोभ्यः
वरिवोविद्धृतं पयः ३ ६(हि)

इति द्वितीयः खण्डः २

९८२ तव श्रियो वर्ष्यस्येव विद्युतोग्नेश्चिकित्र उषसामिवेतयः
यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमासनि १

९८३ वातोपजूत इषितो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे
आ ते यतन्ते रथ्यो३यथा पृथक्शर्धाँस्यग्ने अजरस्य धक्षतः २

९८४ मेधाकारं विदथस्य प्रसाधनमग्निँहोतारं परिभूतरं मतिम्
त्वामर्भस्य हविषः समानमित्त्वां महो वृणते नान्यं त्वत् ३ ७(वु)

९८५ पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण
मित्र वँसि वाँसुमतिम् १

९८६ ता वाँ सम्यगद्रुह्वाणेषमश्याम धाम च
वयं वां मित्रा स्याम २

९८७ पातं नो मित्रा पायुभिरुत त्रायेथाँ सुत्रात्रा
साह्याम दस्यूं तनूभिः ३ ८(य)

९८८ उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः
सोममिन्द्र चमू सुतम् १

९८९ अनु त्वा रोदसी उभे स्पर्धमानमददेताम्

२ ३ १२ ३ १२
इन्द्र यद्दस्युहाभवः २

१ २ ३ १ २ ३ १ २र ३ १ २
९९० वाचमष्टापदीमहं नवस्रक्तिमृतावृधम्
२ ३ १ २ ३क२र
इन्द्रात्परितन्वं ममे ३ ९(द्री)

१ २ ३ २ ३ २ १ २र
९९१ इन्द्राग्नी युवामिमे३ऽभि स्तोमा अनूषत
१ २ ३ २
पिबतँ शम्भुवा सुतम् १

२ ३ १ २ ३ १ २ ३ १ २ ३ १ ३
९९२ या वाँसन्ति पुरुस्पृहो नियुतो दाशुषे नरा
१ २ ३ २ ३ १ २
इन्द्राग्नी ताभिरा गतम् २

२ ३ १ २ ३ २ ३ १ २र ३ २
९९३ ताभिरा गच्छतं नरोपेदँसवनँसुतम्
१ २ ३ १ २
इन्द्राग्नी सोमपीतये ३ १०(हा)

इति तृतीयः खण्डः ३

१ २ ३ १ २ ३ १ २र ३ १ २
९९४ अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत्
२ ३ २ ३ २ ३ २
सीदन्योनौ वनेष्वा १

३ १ २र ३ २ ३ १ २ ३ १ २
९९५ अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः
१ २ ३ १ २
सोमा अर्षन्तु विष्णवे २

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
९९६ इषं तोकाय नो दधदस्मभ्यँ सोम विश्वतः
१ २ ३ १ २
आ पवस्व सहस्रिणम् ३ ११(ला)

१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २
९९७ सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम्

१ २ ३ १ २ ३ १२ ३ १ २ ३ १२
अश्वयेव हरिता याति धारया मन्द्रया याति धारया १

३ २उ ३ १ २ ३ १ २ ३ १ २
९९८ अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः
३ २उ ३ १२ ३ १ २र
समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते २ १२(फ)

१ २ ३ २ ३क २र ३ १ २र ३ १ २
९९९ यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु
१ २ ३ १ २र
तन्नः पुनान आ भर १

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
१००० वृषा पुनान आयुँषि स्तनयन्नधि बर्हिषि
२ ३ २उ ३ १ २
हरिः सन्योनिमासदः २

३ १ २र ३ १ २ ३ १ २
१००१ युवँ हि स्थः स्वःपती इन्द्रश्च सोम गोपती
३ १ २ ३ १ २
ईशाना पिप्यतं धियः ३ १३(पु)

इति चतुर्थः खण्डः ४

२ ३ १ २ ३ १ २ ३ १ २र
१००२ इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः
२उ ३ २ ३ २ ३ १ २र ३ १ २र ३ १ १
तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् १

२ ३ १ २३ २उ ३ १ २ ३ २
१००३ असि हि वीर सेन्योऽसि भूरि परादर्दिः
१ २ ३ १ २ ३ १ २र ३ १ २र ३ १ २
असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु २

२ ३ १२ ३ १ २
१००४ यदुदीरत आजयो धृष्णवे धीयते धनम्
युङ्क्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः
३ १४(खु)

३ २ ३ १ २ ३ २ ३
१००५ स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् १

१ २ ३ २ ३ १ २ ३ १ २
१००६ ता अस्य पृशनायुवः सोम ँ श्रीणन्ति पृश्नयः
३ १ २र ३ २ ३ १ २ ३ १ २ ३ २ ३१ २ ३ १ २
प्रिया इन्द्रस्य धेनवो वज्र ँ हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् २

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
१००७ ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः
३ १ २ ३ १ २ ३ १ २ ३ २ ३१ २ ३ १ २
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ३ १५(व)

इति पञ्चमः खण्डः ५

१ २ ३ १ २र ३ १ २र ३ २
१००८ असाव्य ँ शुर्मदायाप्सु दक्षो गिरिष्ठाः
३ २उ ३ १ २
श्येनो न योनिमासदत् १

३ १ २र ३ १ २ ३ २ ३ १ २र ३ २
१००९ शुभ्रमन्धो देववातमप्सु धौतं नृभिः सुतम्
१ २ ३ २ ३ १ २
स्वदन्ति गावः पयोभिः २

२ ३ २ ३ १ २र ३ १ २ ३ १ २
१०१० आदीमश्वं न हेतारमशूशुभन्नमृताय
२ ३ १ २ ३ १ २
मधो रस ँ सधमादे ३ १६(चु)

३ २ ३ १ ३२उ ३ १ २ ३ १ २ ३ २
१०११ अभि द्युम्नं बृहद्यश इषस्पते दीदिहि देव देवयुम्
१ २र ३ १ २
वि कोशं मध्यमं युव १

१ २ ३क २र ३ २ ३ २उ ३ २ ३ १ २
१०१२ आ वच्यस्व सुदक्ष चम्वोः सुतो विशां वह्निर्न विश्पतिः
३ २ ३ १ २ ३ २ ३ २उ ३ १ २ ३ १ २
वृष्टिं दिवः पवस्व रीतिमपो जिन्वन्गविष्टये धियः २ १७(डा)

३ १ २उ ३ १ २ ३ २ ३ २ ३ १ २
१०१३ प्राणा शिशुर्महीनाँ हिन्वन्नृतस्य दीधितिम्
२ ३ १ २ ३ १ २ ३ १ २ ३ २
विश्वा परि प्रिया भुवदध द्विता १

१ २ ३ १ २ ३ २ऽ १ २ ३ १ २र ३ २
१०१४ उप त्रितस्य पाष्यो३रभक्त यद्गुहा पदम्
३ १ २ ३ १ २र ३ १ २ ३ २
यज्ञस्य सप्त धामभिरध प्रियम् २

१ २ ३ २ ३ १ २ ३ १ २र ३ २
१०१५ त्रीणि त्रितस्य धारया पृष्टेष्वैरयद्रयिम्
१ २ ३ १ २ ३ २ ३ १ २
मिमीते अस्य योजना वि सुक्रतुः ३ १८(री)

१ २ ३ १ २ ३ २ ३ १ २ ३ २
१०१६ पवस्व वाजसातये पवित्रे धारया सुतः
१ २ ३ १ २ ३ २ ३ १ २
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तरः १

१ २र ३ २ ३ १ २ ३ १ २ ३ १ २
१०१७ त्वाँ रिहन्ति धीतयो हरिं पवित्रे अद्रुहः
३ २ ३२उ ३ २३ १ २ ३ १ २
वत्सं जातं न मातरः पवमान विधर्मणि २

१ २र ३ १ २र
१०१८ त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे
१ २ ३ १ २ ३ १ २ ३ २
प्रति द्रापिममुञ्चथाः पवमान महित्वना ३ १९(ता)

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३ १ २
१०१९ इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय
२ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २
हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा १

२ ३ १ २ ३ १ २ ३ २ ३ १ २र ३ १ २
१०२० अध धारया मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः
२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २र
इन्दुरिन्द्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो मदाय २

३ २ ३ १ २ ३ २ ३ २ ३ २उ ३ १ २ ३ २
१०२१ अभि व्रतानि पवते पुनानो देवो देवान्त्स्वेन रसेन पृञ्चन्

२ ३ १ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
इन्दुर्धर्माण्यृतुथा वसानो दश क्षिपो अव्यत सानो अव्ये ३ २०(पी)

इति षष्ठः खण्डः ६

१ २ ३ १ २ ३ १२
१०२२ आ ते अग्न इधीमहि द्युमन्तं देवाजरम्
२ ३ २ ३ १ २ ३ २ ३१ २ ३ १ २र ३ २ ३ १ २
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषꣳ स्तोतृभ्य आ भर १

१ २ ३ २ ३ २ ३ १ २
१०२३ आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते
१ २ ३ २ ३ १ २३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
सुश्चन्द्र दस्म विश्पते हव्यवाट्तुभ्यꣳ हूयत इषꣳ स्तोतृभ्य आ भर २

१ २र ३ १ २ ३ १ २
१०२४ ओभे सुश्चन्द्र विश्पते दर्वी श्रीणीष आसनि
३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर ३ २१(रा)

१ २३ १ २ ३ १ २ ३ २ ३ २
१०२५ इन्द्राय साम गायत विप्राय बृहते बृहत्
३ १ २ ३ १ २ ३ १ २
ब्रह्माकृते विपश्चिते पनस्यवे १

१ २ ३ १ २ ३ १ २र
१०२६ त्वमिन्द्राभिभूरसि त्वꣳ सूर्यमरोचयः
३ १ २ ३ १ २ ३ १ २
विश्वकर्मा विश्वदेवो महाꣳ असि २

३ २ ३ १ २ ३ २ऽ १ २ ३ २ ३ २
१०२७ विभ्राजं ज्योतिषा त्व३रगच्छो रोचनं दिवः
३ १ २ ३ १ २
देवास्त इन्द्र सख्याय येमिरे ३ २२(व)

१ २ ३ १ २ ३ १ २ ३ १ २
१०२८ असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि
१ २ ३२उ ३ २ ३ २ ३ १ २
आ त्वा पृणक्त्विन्द्रियꣳ रजः सूर्यो न रश्मिभिः १

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१०२९ आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी

१ २३ २ ३ २ ३ १ २ ३ १ २
अर्वाचीनँ सु ते मनो ग्रावा कृणोतु वग्नुना २

२ ३ १ २र ३ १ २
१०३० इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम्
१ २ ३ १ २र ३ २ ३ १ २
ऋृषीणाँ सुष्टुतीरुप यज्ञं च मानुषाणाम् ३ २३(पा)

इति सप्तमः खराडः ७

इति तृतीयप्रपाठके द्वितीयोऽर्धः ३

तृतीयः प्रपाठकश्च समाप्तः ३

इति षष्ठोऽध्यायः ६

अथ सप्तमोऽध्यायः

अथ चतुर्थप्रपाठके प्रथमोऽर्धः ४

(१-२४) १ त्रयः २, ११ कश्यपो मारीचः ३ मेधातिथिः कारावः ४ हिररायस्तूप आङ्गिरसः ५ अवत्सारः काश्यपः ६ जमदग्निर्भार्गवः ७, २१ कुत्स आङ्गिरसः ८ वसिष्ठो मैत्रावरुणिः ९ त्रिशोकः कारावः १० श्यावाश्व आत्रेयः १२ सप्तर्षयः १३ अमहीयुरांगिरसः १४ शुनःशेप आजीगर्तिः १५ मधुच्छन्दा वैश्वामित्रः १६ (१, ३, २-पूर्वाधः) मान्धाता यौवनाश्वः १६ (२ उत्तरार्धः) गोधा ऋृषिका १७ असितः काश्यपो देवलो वा १८ (१) ऋृणंचयो राजर्षिः १८ (२) शक्तिर्वासिष्ठः १९ पर्वतनारदौ कारावौ २० मनुः सांवरणः २२ बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्च क्रमेण गोपायना लौपायना वा २३ भुवन आप्तयः साधनो वा भौवनः ॥ १-६, ११-१३, १७-२१ पवमानः सोमः ७, २२ अग्निः ८ आदित्यः ९, १४-१६ इन्द्रः १० इन्द्राग्नी २३ विश्वे देवाः २४ ॥ १, ७ जगती २-६, ८-११, १३-१५, १७ गायत्री १२ प्रगाथः १६ महापंक्तिः १८ (१) यवमध्या गायत्री १८ (२) सतोबृहती १९ उष्णिक् २० अनुष्टुप् २१ त्रिष्टुप् २२ द्विपदा विराट् २३ द्विपदा त्रिष्टुप् २४ ॥

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
१०३१ ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभूवसुः
१ २ ३ १ २ ३ १ २ ३क २र ३ १ २ ३१ २ ३ १ २र
दधाति रत्नँ स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रसः १

३ १ २ ३ १ २ ३क २र ३ १ २ ३ २ ३ १ २ ३ २
१०३२ अभिक्रन्दन्कलशं वाज्यर्षति पतिर्दिवः शतधारो विचक्षणः
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
हरिर्मित्रस्य सदनेषु सीदति मर्मृजानोऽविभिः सिन्धुभिर्वृषा २

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
१०३३ अग्रे सिन्धूनां पवमानो अर्षस्यग्रे वाचो अग्रियो गोषु गच्छसि
२ ३ १ २ ३ १ २र ३ २ ३ १ २
अग्रे वाजस्य भजसे महद्धनँ स्वायुधः सोतृभिः सोम सूयसे ३ १(लु)

१ २ ३ २ ३ १ २ ३ १ २र ३ २
१०३४ असृक्षत प्र वाजिनो गव्या सोमासो अश्वया
३ १ २ ३ १ २र
शुक्रासो वीरयाशवः १

३ १ २ ३ १ २ ३ १ २ ३ १ २
१०३५ शुम्भमाना ऋतायुभिर्मृज्यमाना गभस्त्योः
१ २ ३ १ २ ३ १ २
पवन्ते वारे अव्यये २

१ २र ३ २ ३ २ ३ १ २ ३ २ ३ १ २
१०३६ ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा
१ २ ३ १ २र
पवन्तामान्तरिक्ष्या ३ २(वी)

१ २ ३ १ २र ३ १ २ ३ १ २
१०३७ पवस्व देववीरति पवित्रँसोम रँह्या
१ २ ३ १ २र
इन्द्रमिन्दो वृषा विश १

१ २ ३ २ ३ २ ३ १ २ ३ १ २
१०३८ आ वच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः
१ २र ३ १ २
आ योनिं धर्णसिः सदः २

१ २ ३२उ ३ १ २ ३ १ २ ३ १ २
१०३९ अधुक्षत प्रियं मधु धारा सुतस्य वेधसः
३ १ २ ३ १ २
अपो वसिष्ट सुक्रतुः ३

३ १ २ ३ १ २र ३ १ २
१०४० महान्तं त्वा महीरन्वापो अर्षन्ति सिन्धवः
१ २र ३ १ २
यद्गोभिर्वासयिष्यसे ४

३ २ ३ १ २ ३ २ ३१ २ ३ २
१०४१ समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः
१ २ ३ १ २ ३ २
सोमः पवित्रे अस्मयुः ५

१ २ ३ २ ३ १ २ ३ २ ३ १ २र ३ २
१०४२ अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः
१ २र
सँ सूर्येण दिद्युते ६

१२ ३ १ २ ३ १ २ ३ १ २
१०४३ गिरस्त इन्द ओजसा मर्मृज्यन्ते अपस्युवः
२ ३१ २३ १ २
याभिर्मदाय शुम्भसे ७

२ ३ १ २३ १ २ ३१ २
१०४४ तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे
२ ३ १ २ ३ २
तव प्रशस्तये महे ८

३ १ २ ३ १ २ ३ १ २ ३ २ ३२
१०४५ गोषा इन्दो नृषा अस्यश्वसा वाजसा उत
३ २ ३१ २ ३ २
आत्मा यज्ञस्य पूर्व्यः ९

३ १ २ ३१ २र ३ १२
१०४६ अस्मभ्यमिन्दविन्द्रियं मधोः पवस्व धारया
३ १ २ ३ १ २
पर्जन्यो वृष्टिमाँ इव १० ३(कै)

इति प्रथमः खण्डः १

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
१०४७ सना च सोम जेषि च पवमान महि श्रवः
१ २ ३ १ २
अथा नो वस्यसस्कृधि १

२ ३ २ ३ २ ३ २ऽ १ २ ३ १ २
१०४८ सना ज्योतिः सना स्व३र्विश्वा च सोम सौभगा
१ २ ३ १ २
अथा नो वस्यसस्कृधि २

२ ३ १ २ ३२उ ३ १ २ ३ १ २
१०४९ सना दक्षमुत क्रतुमप सोम मृधो जहि
१ २ ३ १ २
अथा नो वस्यसस्कृधि ३

१ २ ३ २ ३ २ ३ १ २ ३ १ २
१०५० पवीतारः पुनीतन सोममिन्द्राय पातवे
१ २ ३ १ २
अथा नो वस्यसस्कृधि ४

१ २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २
१०५१ त्वꣳसूर्ये न आ भज तव क्रत्वा तवोतिभिः
१ २ ३ १ २
अथा नो वस्यसस्कृधि ५

२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
१०५२ तव क्रत्वा तवोतिभिर्ज्योक्पश्येम सूर्यम्
१ २ ३ १ २
अथा नो वस्यसस्कृधि ६

२क २र ३ १ २ ३ १ २ ३ २
१०५३ अभ्यर्ष स्वायुध सोम द्विबर्हसꣳ रयिम्
१ २ ३ १ २
अथा नो वस्यसस्कृधि ७

३ २ १ २ ३ १ २ ३ १ २ ३ २
१०५४ अभ्य३र्षानपच्युतो वाजिन्त्समत्सु सासहिः
१ २ ३ १ २
अथा नो वस्यसस्कृधि ८

२ ३ १ २ ३ १ २ ३ १ २
१०५५ त्वां यज्ञैरवीवृधन्पवमान विधर्मणि
१ २ ३ १ २
अथा नो वस्यसस्कृधि ९

३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
१०५६ रयिं नश्चित्रमश्विनमिन्दो विश्वायुमा भर

१ २ ३ १ २
अथा नो वस्यसस्कृधि १० ४(चा)

२३ २ ३ १ २ ३ १ २ ३१ २र
१०५७ तरत्स मन्दी धावति धारा सुतस्यान्धसः
२३ २ ३ १ २
तरत्स मन्दी धावति १

३ १ २३ १ २ ३ १ २ ३ १ २
१०५८ उस्रा वेद वसूनां मर्तस्य देव्यवसः
२३ २ ३ १ २
तरत्स मन्दी धावति २

३ १ २ ३ २ ३ २ ३१ २
१०५९ ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे
२३ २ ३ १ २
तरत्स मन्दी धावति ३

१ २र ३ २३ १ २ ३१ २ ३ १ २
१०६० आ ययोस्त्रिँशतं तना सहस्राणि च दद्महे
२३ २ ३ १ २
तरत्स मन्दी धावति ४ ५(हा)

३१ २र ३ १ २र ३ २
१०६१ एते सोमा असृक्षत गृणानाः शवसे महे
३ १ २ ३ १२
मदिन्तमस्य धारया १

३ १ २र ३१२ ३ १ २ ३ १ २
१०६२ अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि
३१ २ ३ १ २
सनद्वाजः परि स्रव २

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१०६३ उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः
३ २ ३ १ २
गृणानो जमदग्निना ३ ६(वि)

३२उ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१०६४ इमँ स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया
३ २उ ३ १ २ ३ १ २र ३ १ २र ३ १ २र
भद्रा हि नः प्रमतिरस्य सँसद्यग्ने सख्ये मा रिषामा वयं तव १

१ २३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
१०६५ भरामेध्मं कृणवामा हवीँषि ते चितयन्तः पर्वणापर्वणा वयम्
३ १ २ ३ १ २ ३ १ २र ३ १ २र ३ १ २र
जीवातवे प्रतराँ साधया धियोऽग्ने सख्ये म रिषामा वयं तव २

३ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
१०६६ शकेम त्वा समिधँसाधया धियस्त्वे देवा हविरदन्त्याहुतम्
१ २ ३ १ २र ३ २ऽ १ २र ३ १ २र ३ १ २र
त्वमादित्याँश्रा वह तान्ह्यू३श्मस्यग्ने सख्ये मा रिषामा वयं तव ३ ७(छौ)

इति द्वितीयः खराडः २

१ २ ३ २३ १ २ ३ १ २ ३ १ २
१०६७ प्रति वाँसूर उदिते मित्रं गृणीषे वरुणम्
३ १ २ ३ १ २
अर्यमणँ रिशादसम् १

३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
१०६८ राया हिरगयया मतिरियमवृकाय शवसे
३ १ २र ३ १ २
इयं विप्रा मेधसातये २

१ २ ३ १ २ ३ १ २ ३ २
१०६९ ते स्याम देव वरुण ते मित्र सूरिभिः सह
२ ३क २र
इष ँ स्वश्च धीमहि ३ ८(हा)

३ २उ ३ २ ३ २ ३ २ ३ १ २ ३ १ २र
१०७० भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः
१ २ ३ १ २र
वसु स्पार्हं तदा भर १

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २
१०७१ यस्य ते विश्वमानुषग्भूरेर्दत्तस्य वेदति
१ २ ३ १ २र
वसु स्पार्हं तदाभर २

२ ३ १ २ ३ २ ३१ २र ३ १ २
१०७२ यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम्
१ २ २ १ २र
वसु स्पार्हं तदा भर ३ ९(चू)

३ २ ३ २उ ३ २ ३ २ ३ १ २३ १ २
१०७३ यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु
१ २ ३ १ २
इन्द्राग्नी तस्य बोधतम् १

३ १ २ ३ १ २ ३ १ २र
१०७४ तोशासा रथयावाना वृत्रहणापराजिता
१ २ ३ १ २
इन्द्राग्नी तस्य बोधतम् २

३ १ २ ३१ २र ३ १ २ ३ १ २
१०७५ इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः
१ २ ३ १ २
इन्द्राग्नी तस्य बोधतम् ३ १०(टा)

इति तृतीयः खण्डः ३

१ २ ३ १ २ ३ १ २ ३ १ २
१०७६ इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः
३ २ ३ १ २ ३ १ २
अर्कस्य योनिमासदम् १

२ ३ १ २ ३ २३ १ २ ३ २
१०७७ तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति धर्णसिम्
१ २ ३ १ २
सं त्वा मृजन्त्यायवः २

१ २ ३ १ २ ३ १ २र ३ १ २
१०७८ रसं ते मित्रो अर्यमा पिबन्तु वरुणः कवे
१ २ ३ १ २
पवमानस्य मरुतः ३ ११(ल)

३ १ २ ३ १ २र
१०७९ मृज्यमानः सुहस्त्य समुद्रे वाचमिन्वसि
३ २ ३ १ २ ३ १ २३ २३ १ २ ३क २र
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि १

३ २उ ३ १ २ ३ २३ १ २ ३ १ २
१०८० पुनानो वारे पवमनो अव्यये वृषो अचिक्रदद्वने
३ १ २ ३ १ २र ३ १ २
देवानाँ सोम पवमान निष्कृतं गोभिरञ्जानो अर्षसि २ १२(ति)

३ २ ३ २उ ३ १ २ ३ २ ३ १ २
१०८१ एतमु त्यं दश क्षिपो मृजन्ति सिन्धुमातरम्
१ २ ३ १ २
समादित्येभिरख्यत १

१ २र ३ २ ३ १ २ ३ १ २ ३ २३ २
१०८२ समिन्द्रेणोत वायुना सुत एति पवित्र आ
१ २र ३ १ २
सँ सूर्यस्य रश्मिभिः २

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१०८३ स नो भगाय वायवे पूष्णे पवस्व मधुमान्
१ २ ३ १ २र
चारुर्मित्रे वरुणे च ३ १३(टि)

इति चतुर्थः खण्डः ४

३ १ २ ३ २३ १ २ ३ १ २
१०८४ रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः
३ २ ३ २ ३ १ २
क्षुमन्तो याभिर्मदेम १

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
१०८५ आ घ त्वावां त्मना युक्तः स्तोतृभ्यो धृष्णवीयानः
३ २उ ३ २ ३क २र
ऋणोरक्षं न चक्रयोः २

१ २र ३ १ २र ३ २
१०८६ आ यद्दुवः शतक्रतवा कामं जरितृणाम्
३ २उ ३ १ २र
ऋणोरक्षं न शचीभिः ३ १४(ठी)

३ २ ३ १ २ ३ १ २ ३ १ २
१०८७ सुरूपकृत्नुमूतये सुदुघामिव गोदुहे
३ २ ३ १ २
जुहूमसि द्यविद्यवि १

१ २ ३ २ ३ १ २ ३ १ २
१०८८ उप नः सवना गहि सोमस्य सोमपाः पिब
३ २उ ३ २ ३ १ २
गोदा इद्रेवतो मदः २

१ २ ३ १ २ ३ १ २ ३ २
१०८९ अथा ते अन्तमानां विद्याम सुमतीनाम्
२ ३ १ २ ३ १ २
मा नो अति ख्य आ गहि ३ १५(कौ)

३ १ २र ३ १ २ ३ २ ३ १ २
१०९० उभे यदिन्द्र रोदसी आपप्राथोषा इव
३ १ २ ३ १ २ ३ १ २ ३ २
महान्तं त्वा महीनाँ सम्राजं चर्षणीनाम्
३ १ २र ३ १ २र
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् १

३ १ २ ३ १ २ ३ २ ३ १ २
१०९१ दीर्घँ ह्यङ्कुशं यथा शक्तिं बिभर्षि मन्तुमः
१ २ ३ २ ३ २ ३ १ २र
पूर्वेण मघवन्पदा वयामजो यथा यमः
३ १ २र ३ १ २र
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् २

१ २ ३ १ २र ३ २
१०९२ अव स्म दुर्हणायतो मर्त्तस्य तनुहि स्थिरम्
३ १ २र ३ २ १ २ ३ १ २
अधस्पदं तमीं कृधि यो अस्माँ अभिदासति
३ १ २र ३ १ २र
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ३ १६(यौ)

इति पञ्चमः खण्डः ५

१ २ ३ १ २ ३ २ ३ २३ १ २
१०९३ परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत्
१ २ ३ १ २
मदेषु सर्वधा असि १

२उ ३ २ ३ २उ ३ २ ३ १ २र
१०९४ त्वं विप्रस्त्वं कविर्मधु प्र जातमन्धसः
१ २ ३ १ २
मदेषु सर्वधा असि २

१ २र ३ १ २ ३ १ २ ३ १ २
१०९५ त्वे विश्वे सजोषसो देवासः पीतिमाशत
१ २ ३ १ २
मदेषु सर्वधा असि ३ १७(खा)

१ २ ३ १ २र ३ २ ३ १ २३ १ २र
१०९६ स सुन्वे यो वसूनां यो रायामानेता य इडानाम्
२ ३ १ २ ३ २
सोमो यः सुक्षितीनाम् १

१ २ ३ २ ३ २ ३ १ २ ३२ ३ १ २ ३ २ ३ १ २
१०९७ यस्य त इन्द्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः
१ २र ३ १ २र ३ १ २ ३ २ ३ १ २ ३ २
आ येन मित्रावरुणा करामह एन्द्रमवसे महे २ १८(ली)

१ २ ३ १ २ ३ २ ३ १ २
१०९८ तं वः सखायो मदाय पुनानमभि गायत
२ ३ २ ३ १ २ ३ १ २
शिशुं न हव्यैः स्वदयन्त गूर्तिभिः १

२ ३ १ २ ३ २ ३ १ २ ३ १ २
१०९९ सं वत्स इव मातृभिरिन्दुर्हिन्वानो अज्यते
३ १ २र ३ २ ३ १ २
देवावीर्मदो मतिभिः परिष्कृतः २

३ १ २र ३ १ २ ३ १ २र ३ १ २
११०० अयं दक्षाय साधनोऽयँ शर्धाय वीतये
३ २ ३ २ ३ १ २ ३ २
अयं देवेभ्यो मधुमत्तरः सुतः ३ १९(यि)

१ २ ३ १ २ ३ १ २ ३ १ २
११०१ सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः
३ २ ३ १ २३ १ २ ३क २र ३ १ २
मित्राः सुवाना अरेपसः स्वाध्यः स्वर्विदः १

२ ३ १ २ ३ २३ १ २ ३ १ २
११०२ ते पूतासो विपश्चितः सोमासो दध्याशिरः
१ २ ३ १ २ ३ १ २ ३१ २ ३ २ ३२
सूरासो न दर्शतासो जिगत्नवो ध्रुवा घृते २

३ २ ३ १ २ ३ १ २ ३ १ २र ३ २
११०३ सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इषमस्मभ्यमभितः समस्वरन्वसुविदः ३ २०(वा)

३ २ ३ १ २ ३ १ २र ३ १ २ ३ १२ ३ १ २
११०४ अया पवा पवस्वैना वसूनि माँश्चत्व इन्दो सरसि प्र धन्व
३ २ ३ २ ३ २ ३ २ ३ १ २३१ २ ३१ २३ १२
ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् १

३१ २ ३ १ २३ १ २३ १ २ ३२ ३ १ २ ३२
११०५ उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे
३ २ ३१ २ ३ १ २र ३२उ ३ १ २ ३१ २
षष्टिँ सहस्रा नैगुतो वसूनि वृक्षं न पक्वं धूनवद्रणाय २

२ ३१ २ ३ २३ १२ ३१ २र ३ १ २ ३ १ २
११०६ महीमे अस्य वृष नाम शूषे माँश्चत्वे वा पृशने वा वधत्रे
१ २ ३१२ ३२३ २ ३ २ ३ २ ३ १ २ ३२
अस्वापयन्निगुतः स्नेहयच्चापामित्राँ अपाचितो अचेतः ३ २१(कि)

इति षष्ठः खण्डः ६

२ ३ २ ३ १ २ ३२ ३ २ ३ १ २ ३क २र
११०७ अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः १

१ २३ १ २र ३ १ २ ३१२ ३ १ २
११०८ वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दाः २

१ २ ३ १२ ३१ २ ३ १ २
११०९ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ३ २२(वा)

३ २उ ३ १ २ ३१ २३ १२ ३ २
१११० इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः १

३ १ २ ३क २र ३ १ २ ३ १ २र ३१ २
११११ यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधातु २

३ २उ ३ १ २ ३१ २३ १ २ ३ १ २
१११२ आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत् ३ २३(चा)

१
१११३ प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते १

२र
१११४ अर्चन्त्यर्कं मरुतः स्वर्का आ स्तोभति श्रुतो युवा स इन्द्रः २

उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं धीमहे त इन्द्र ३ २४(य)

इति सप्तमः खराडः ७

इति चतुर्थप्रपाठकस्य प्रथमोऽर्धः ७ इति सप्तमोऽध्यायः ७

अथाष्टमोऽध्यायः

अथ चतुर्थप्रपाठकस्य द्वितीयोऽर्धः ४

(१-१४) १ (१-३) वृषगणो वासिष्ठः १ (४-१२), २ (१-९) असितः काश्यपो देवलो वा २ (१०-१२), ११ भृगुर्वारुणिर्जमदग्निर्भार्गवो वा ३, ६ भरद्वाजो बार्हस्पत्यः ४ यजत आत्रेयः ५ मधुच्छन्दा वैश्वामित्रः ७ सिकता निवावरी ८ पुरुहन्मा आंगिरसः ९ पर्वतनारदौ कागवौ शिखगिडन्यावप्सरसौ काश्यपौ वा १० अग्नये धिष्णयो ऐश्वराः १२ वत्सः कागवः १३ नृमेध आंगिरसः १४ अत्रिर्भौमः ॥ १-२, ७, ९-११ पवमानः सोमः ३, १२ अग्निः ४ मित्रावरुणौ ५, ८, १३-१४ इन्द्रः ६ इन्द्राग्नी ॥ (१-३), ३ त्रिष्टुप् १ (४-१२), २, ४-६, ११-१२ गायत्री ७ जगती ८ प्रगाथः ९ उष्णिक् १० द्विपदा विराट्

१३ (१-२) ककुप् १३ (३) पुर उष्णिक् १४ अनुष्टुप् ॥

१ २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २
१११९ प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति
१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३क २र ३ १ २
महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् १

२ ३ १ २ ३१ २ ३२उ ३ २उ ३ १ २
१११७ प्र हँसासस्तृपला वग्नुमच्छामादस्तं वृषगणा अयासुः
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ २
आङ्गोषिणं पवमानँ सखायो दुर्मर्षं वाणं प्र वदन्ति साकम् २

१ २ ३ १ २ ३ २ ३ १ ३ ३ १ २र
१११८ स योजत उरुगायस्य जूतिं वृथा क्रीडन्तं मिमते न गावः
३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ २
परीणसं कृणुते तिग्मशृङ्गो दिवा हरिर्ददृशे नक्तमृज्रः ३

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१११९ प्र स्वानासो रथा इवार्वन्तो न श्रवस्यवः
१ २ ३ १ २
सोमासो राये अक्रमुः ४

३ २ ३ १ २ ३१ २र
११२० हिन्वानासो रथा इव दधन्विरे गभस्त्योः
१ २ ३ १ २
भरासः कारिणामिव ५

१ २ ३ १ २र ३ १ २ ३ १ २
११२१ राजानो न प्रशस्तिभिः सोमासो गोभिरञ्जते
३ २उ ३ २ ३ १ २
यज्ञो न सप्त धातृभिः ६

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
११२२ परि स्वानास इन्दवो मदाय बर्हणा गिरा
१ २ ३ १ २
मधो अर्षन्ति धारया ७

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
११२३ आपानासो विवस्वतो जिन्वन्त उषसो भगम्
२ ३ २ ३ १ २
सूरा अरवं वि तन्वते ८

२३ १ २ ३ २ ३ १ २ ३१ २
११२४ अप द्वारा मतीनां प्रत्ना ऋगवन्ति कारवः
२ ३ १२ ३ १ २
वृष्णो हरस आयवः ९

३ १ २ ३ १ २ ३ १ २
११२५ समीचीनास आशत होतारः सप्तजानयः
३ १ २र ३ १ २
पदमेकस्य पिप्रतः १०

२ ३ १ २ ३ १ २३ १ २ ३ १ २ ३ २
११२६ नाभा नाभिं न आ ददे चक्षुषा सूर्यं दृशे
३ १ २र ३ १ २
कवेरपत्यमा दुहे ११

३ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
११२७ अभि प्रियं दिवस्पदमध्वर्युभिर्गुहा हितम्

१२ ३ १ २
सूरः पश्यति चक्षसा १२ १(भ्फौ)

इति प्रथमः खण्डः १

१ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
११२८ असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः
३ १ २ ३ १ २
विदाना अस्य योजना १

२उ ३ १ २ ३ २ ३ २३ १ २र
११२९ प्र धारा मधो अग्रियो महीरपो वि गाहते
३ २३ २ ३ १ २
हविर्हविःषु वन्द्यः २

२ ३ २ ३ १ २ ३ १ २र ३ १ २
११३० प्र युजा वाचो अग्रियो वृषो अचिक्रदद्वने
२ ३ २ ३ १ २ ३२
सद्माभि सत्यो अध्वरः ३

२ ३ १ २र ३ २३ १ २ ३ १ २र
११३१ परि यत्काव्या कविर्नृम्णा पुनानो अर्षति
२र ३ १ २
स्वर्वाजी सिषासति ४

१ २ ३ २उ ३ २ ३ १ २
११३२ पवमानो अभि स्पृधो विशो राजेव सीदति
१ २३ १ २ ३ १ २
यदीमृण्वन्ति वेधसः ५

२ ३ २३ १ २ ३ २उ ३ १ २
११३३ अव्या वारे परि प्रियो हरिर्वनेषु सीदति
३ १ २ ३ २
रेभो वनुष्यते मती ६

२ ३ १ २र ३ १ २ ३ १ २र
११३४ स वायुमिन्द्रमश्विना साकं मदेन गच्छति
२ ३ १ २ ३ १ २
रणा यो अस्य धर्मणा ७

२ ३ १ २र ३ २ ३ १ २ ३ १ २
११३५ आ मित्रे वरुणे भगे मधोः पवन्त ऊर्मयः

३   १ २ ३   १ २
विदाना अस्य शक्मभिः ८

३ १ २   ३ २उ   ३   १ २   ३ १ २
११३६ अस्मभ्यँ रोदसी रयिं मध्वो वाजस्य सातये
२ ३   १ २ ३   १ २
श्रवो वसूनि सञ्जितम् ९

२ ३   १ २   ३ २ ३   १   २ ३   १   २
११३७ आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे
२ ३   १   २३   १ २
पान्तमा पुरुस्पृहम् १०

२ ३ १   २र   ३ २उ   ३   १   २ ३   १ २
११३८ आ मन्द्रमा वरेण्यमा विप्रमा मनीषिणम्
२ ३   १   २३   १ २
पान्तमा पुरुस्पृहम् ११

२ ३ १   २र ३ २ ३   १   २   ३ २
११३९ आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा
२ ३   १   २३   १ २
पान्तमा पुरुस्पृहम् १२   २(ण)

इति द्वितीयः खण्डः २

३   १ २   ३   १   २३   १   २   ३   १   २   ३२ ३२र   ३ २ ३   २
११४० मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्
३   २   ३   २ ३ १   २   ३   १   २   ३ २ ३   १ २   ३   २
कविँ सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः १

१   २र   ३   १ २   ३   २ ३   २ ३   २ ३   १   २र
११४१ त्वां विश्वे अमृतं जायमानँ शिशुं न देवा अभि सं नवन्ते
२ ३   १ २   ३   १   २ ३   १   २   ३   २   ३ १   २र
तव क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदेः २

१   २   ३   २   ३   १ २   ३   २   ३   १   २   ३ २ ३   १   २र
११४२ नाभिं यज्ञानाँ सदनँ रयीणां महामाहावमभि सं नवन्त
३   २ ३क २र   ३   १   २   ३ १   २   ३ १   २   ३   २
वैश्वानरँ रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः ३   ३(कु)

१   २   ३   १ २   ३   १ २   ३   २   ३ २
११४३ प्र वो मित्राय गायत वरुणाय विपा गिरा

१ २ ३ २ ३ २
महि क्षत्रावृतं बृहत् १

३ २ ३ २ ३ १ २ ३ २ ३ १ २र
११४४ सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च
३ २ ३ १ २ ३ २
देवा देवेषु प्रशस्ता २

१ २ ३ १ २ ३ १ ३ २ ३ १ २
११४५ ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य
१ २ ३ २ ३ १ २
महि वां क्षत्रं देवेषु ३ ४(र)

१ २र ३ २ ३ २ ३ १ २
११४६ इन्द्रा याहि चित्रभानो सुता इमे त्वायवः
१ २ ३ १ २ ३ १ २
अण्वीभिस्तना पूतासः १

१ २र ३ २ ३ १ २र ३ १ २
११४७ इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः
२३ १ २ ३ १ २
उप ब्रह्माणि वाघतः २

१ २र ३ १ २ ३ २३ १ २
११४८ इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः
३ १ २ ३ १ २
सुते दधिष्व नश्चनः ३ ५(ही)

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
११४९ तमीडिष्व यो अर्चिषा वना विश्वा परिष्वजत्
३ २ ३ १ २ ३ १ २
कृष्णा कृणोति जिह्वया १

२ ३ २ ३ १ २ ३ १ २र ३ १ २
११५० य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः
३ १ २ ३ १ २ ३ २
द्युम्नाय सुतरा अपः २

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
११५१ ता नो वाजवतीरिष आशून्पिपृतमर्वतः
१ २३ २ ३ १ २
एन्द्रमग्निं च वोढवे ३ ६(य)

इति तृतीयः खराडः ३

१ २ ३ २ ३ १ २ ३२उ ३ २ ३१ २र ३ १२
११५२ प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतँ सखा सख्युर्न प्र मिनाति सङ्गिरम्
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३१ २ ३ २
मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा १

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १२
११५३ प्र वो धियो मन्द्रयुवो विपन्युवः पनस्युवः संवरणेष्वक्रमुः
२ ३ १ २ ३क २र ३ २ ३ २ ३ २ ३ २ ३ १ २
हरिं क्रीडन्तमभ्यनूषत स्तुभोऽभि धेनवः पयसेदशिश्रयुः २

१ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
११५४ आ नः सोम संयतं पिप्युषीमिषमिन्दो पवस्व पवमान ऊर्मिणा
२ ३ १ २ ३ २उ ३ १ २ ३ १ २र ३ १ २ ३ १ २
या नो दोहते त्रिरहन्नसश्चुषी क्षुमद्वाजवन्मधुमत्सुवीर्यम् ३ ७(ठि)

२ ३ १ २र ३ २ ३ १ २ ३ १ २
११५५ न किष्टं कर्मणा नशद्यश्चकार सदावृधम्
२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा १

१ २ ३ १ २र ३ १ २र ३ १ २ ३ १ २
११५६ अषाढमुग्रं पृतनासु सासहिं यस्मिन्महीरुरुज्रयः
२ ३ २ ३ १ २ ३ २ ३ १ २
सं धेनवो जायमाने अनोनवुर्द्यावः क्षामीरनोनवुः २ ८(ही)

इति चतुर्थः खराडः ४

१ २ ३ १ २र ३ २ ३ १ २
११५७ सखाय आ नि षीदत पुनानाय प्रगायत
२ ३ २ ३ १ २र ३ २
शिशुं नः यज्ञैः परि भूषत श्रिये १

१ २ ३ २उ ३ १ २ २ १ २ ३ १ २
११५८ समी वत्सं न मातृभिः सृजता गयसाधनम्
३ २क ऽ १ २ ३ १ २र
देवाव्यं३मदमभि द्विशवसम् २

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
११५९ पुनाता दक्षसाधनं यथा शर्धाय वीतये

१ २ ३ २३ १२ ३ १ २
यथा मित्राय वरुणाय शन्तमम् ३ ९(पि)

२ ३क २र ३ १ २ ३२ ३ २३ २उ ३ १ २
११६० प्र वाज्यक्षाः सहस्रधारस्तिरः पवित्रं वि वारमव्यम् १

२ ३क २र ३ १ २ ३ १ २ ३ १ २र ३ २
११६१ स वाज्यक्षाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः २

१ २ ३ १ २ ३ १ २र ३ १ २र ३ २
११६२ प्र सोम याहीन्द्रस्य कुक्षा नृभिर्येमानो अद्रिभिः सुतः ३ १०(पु)

१ २र ३ २ ३ १ २ ३ १ २ ३२
११६३ ये सोमासः परावति ये अर्वावति सुन्विरे
२ ३ १ २ ३ १ २
ये वादः शर्यणावति १

१ २ ३ २३ १ २ ३ १ २र ३क २र
११६४ य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम्
२ ३ १ २ ३ १ २
ये वा जनेषु पञ्चसु २

१ २ ३ २ ३२उ ३ १ २ ३ २ ३ १ २
११६५ ते नो वृष्टिं दिवस्परि पवन्तामा सुवीर्यम्
३ २ ३ २ ३ १ २
स्वाना देवास इन्दवः ३ ११(चि)

इति पञ्चमः खण्डः ५

१ २ ३ १ २र ३ १ २ ३ १ २
११६६ आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात्
२३ १ २ ३ २
अग्ने त्वां कामये गिरा १

३ २उ ३ २उ ३ २ ३ २ ३ १ २ ३ २
११६७ पुरुत्रा हि सदृङ्ङसि दिशो विश्वा अनु प्रभुः
३ १ २
समत्सु त्वा हवामहे २

३ २ ३ १ २र ३ १ २
११६८ समत्स्वग्निमवसे वाजयन्तो हवामहे

१ ३ ३ २ ३
वाजेषु चित्रराधसम् ३ १२(ठा)

१ २ ३ १ २३ १ २ ३ १ २
११६९ त्वं न इन्द्रा भर ओजो नृम्णँ शतक्रतो विचर्षणे
२ ३१ २ ३ १ २
आ वीरं पृतनासहम् १

१ २र ३ १ २ ३ २ ३ १ २ ३ १ २
११७० त्वँ हि नः पिता वसो त्वं माता शतक्रतो बभूविथ
१ २ ३ १ २
अथा ते सुम्नमीमहे २

१ २ ३ २ ३ १ २
११७१ त्वाँ शुष्मिन्पुरुहूत वाजयन्तमुप ब्रुवे सहस्कृत
१ २ ३ १ २
स नो रास्व सुवीर्यम् ३ १३(ल)

१ २ ३२उ ३ १ २
११७२ यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः
२ ३ १ २ ३ १ २
राधस्तन्नो विदद्वस उभयाहस्त्या भर १

१ २र ३ १२ ३ १ २ ३ १ २र
११७३ यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर
३ २ ३ १ २ ३ १ २र ३ १ २
विद्याम तस्य ते वयमकूपारस्य दावनः २

१ २ ३ २ ३ २ ३ २ ३ १ २ ३२ ३२
११७४ यत्ते दित्सु प्रराध्यं मनो अस्ति श्रुतं बृहत्
१ २ ३ १ २ ३ १ २र ३ १ २
तेन दृढा चिदद्रिव आ वाजं दर्षि सातये ३ १४(पी)

इति षष्ठः खण्डः ६

इति चतुर्थप्रपाठके द्वितीयोऽर्धः २ चतुर्थप्रपाठकश्च समाप्तः ४

इति अष्टमोऽध्यायः ८

## अथ नवमोऽध्यायः

## अथ पञ्चमप्रपाठके प्रथमोऽध्यायः

(१-२०) १ प्रतर्दनो दैवोदासिः २, ३, ४ असितः काश्यपो देवलो वा ५, ११ उचथ्य आंगिरसः ६, ७ अमहीयुराङ्गिरसः ८, १५ निध्रुविः काश्यपः ९ वसिष्ठो मैत्रावरुणिः १० सुकक्ष आंगिरसः १२ कविर्भार्गवः १३ देवातिथिः काण्वः १४ भर्गः प्रागाथः १६ अम्बरीषो वार्षागिरः ऋजिश्वा भारद्वाजश्च १७ अग्नये धिष्ण्या ऐश्वराः १८ उशना काव्यः १९ नृमेध आंगिरसः २० जेता माधुच्छन्दसः ॥ १-८, ११-१२, १५-१७ पवमानः सोमः ९, १८ अग्निः १०, १३, १४, १९-२० इन्द्रः ॥ १-९ त्रिष्टुप् २-८, १०-११, १५, १८ गायत्री जगती १३, १४ प्रगाथः १६, २० अनुष्टुप् १७ द्विपदा विराट् १९ उष्णिक् ॥

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
११७५ शिशुं जज्ञानँ हर्यतं मृजन्ति शुम्भन्ति विप्रं मरुतो गणेन
३ २ ३ १ २र ३ १ २र ३ २ ३ १ २ ३ १ २
कविर्गीर्भिः काव्येना कविः सन्त्सोमः पवित्रमत्येति रेभन् १

३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ २
११७६ ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रनीथः पदवीः कवीनाम्
३ २ ३ १ २ ३ १ २र ३ १ २ ३ २ ३ १ २ ३ २
तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनु राजति ष्टुप् २

३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २र ३ १ २
११७७ चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत्
३ २ ३ १ २र ३ २ ३ २ ३ १ २ ३ १ २
अपामूर्मिँ सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ३ १(लु)

३ १ २र ३ २ ३ १ २र ३ १ २
११७८ एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन्
१ २ ३क२र
वर्धन्तो अस्य वीर्यम् १

३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
११७९ पुनानासश्चमूषदो गच्छन्तो वायुमश्विना
१ २ ३ १ २
ते नो धत्त सुवीर्यम् २

१ २ ३ १ २ ३ १ २र
११८० इन्द्रस्य सोम राधसे पुनानो हार्दि चोदय

३ २ ३ १ २ ३ १ २
देवानां योनिमासदम् ३

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
११८१ मृजन्ति त्वा देश क्षिपो हिन्वन्ति सप्त धीतयः
२ ३ १ २
अनु विप्रा अमादिषुः ४

३ १ २ ३ १ २ ३ १ २ ३ १ २र ३क २र
११८२ देवेभ्यस्त्वा मदाय कँ सृजानमति मेष्यः
१ २र
सं गोभिर्वासयामसि ५

३ २ ३ २ ३ १ २र ३ १ २र
११८३ पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः
२ ३ १ २
परि गव्यान्यव्यत ६

३ २ ३ १ २ ३ २उ ३ २ ३ १ २
११८४ मघोन आ पवस्व नो जहि विश्वा अप द्विषः
२ ३ १ २ ३ १ १
इन्दो सखायमा विश ७

३ १ २ ३ १ २र ३ १ २
११८५ नृचक्षसं त्वा वयमिन्द्रपीतँ स्वर्विदम्
३ १ २ ३ १ २र
भक्षीमहि प्रजामिषम् ८

३ २ ३ १ २र ३ १ २ ३ १ २र
११८६ वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या अधि
१ २ ३ १ २
सहो नः सोम पृत्सु धाः ९ २(ति)

इति प्रथमः खण्डः १

१ २ ३ १ २ ३ १ २ ३ १ २
११८७ सोमः पुनानो अर्षति सहस्रधारो अत्यविः
३ १ २र ३ २
वायोरिन्द्रस्य निष्कृतम् १

१ २ ३ १ २ ३ १ २र
११८८ पवमानमवस्यवो विप्रमभि प्र गायत

३ २ ३ १ २
सुष्वाणं देववीतये २

१ २ ३ १ २ ३ १ २ ३ १ २
११८९ पवन्ते वाजसातये सोमाः सहस्रपाजसः
३ २ ३ १ २
गृणाना देववीतये ३

३ २ ३ १ २ ३ १ २ ३ १ २र
११९० उत नो वाजसातये पवस्व बृहतीरिषः
३ १ २ ३ १ २
द्युमदिन्दो सुवीर्यम् ४

१ २ ३ २उ ३ २ ३१ २ ३ १ २
११९१ अत्या हियाना न हेतृभिरसृग्रं वाजसातये
२उ ३ १ २ ३ १ २
वि वारमव्यमाशवः ५

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २
११९२ ते नः सहस्रिणँ रयिं पवन्तामा सुवीर्यम्
३ २ ३ २ ३ १ २
सुवाना देवास इन्दवः ६

३ १ २३ १ २ ३ २ ३ २उ ३ १ २
११९३ वाश्रा अर्षन्तीन्दवोऽभि वत्सं न मातरः
३ १ २र
दधन्विरे गभस्त्योः ७

२ ३ १ २ ३१ २र ३ १ २
११९४ जुष्ट इन्द्राय मत्सरः पवमानः कनिक्रदत्
२ ३ २३ १ २
विश्वा अप द्विषो जहि ८

३ २ ३ १ २ ३ १ २ ३ १ २
११९५ अपघ्नन्तो अराव्णः पवमानाः स्वर्दृशः
१ २ ३ १ २
योनावृतस्य सीदत ९ ३(दू)

इति द्वितीयः खण्डः २

१ २ ३ १ २ ३ २ ३ २ ३ १२
११९६ सोमा असृग्रमिन्दवः सुता ऋतस्य धारया

१ २३ १२
इन्द्राय मधुमत्तमाः १

३ १ २र ३ १ २ ३ २उ ३ १ २
११९७ अभि विप्रा अनूषत गावो वत्सं न धेनवः
२ ३ १ २ ३ १ २
इन्द्रँ सोमस्य पीतये २

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
११९८ मदच्युत्क्षेति सादने सिन्धोरूर्मा विपश्चित्
१ २ ३ १ २र ३ २
सोमो गौरी अधि श्रितः ३

३ १ २र ३ २ ३ १ २
११९९ दिवो नाभा विचक्षणोऽव्या वारे महीयते
२ ३ २ ३ १ २ ३ २
सोमो यः सुक्रतुः कविः ४

१ २र ३ २ ३ २ ३ २ ३ २ ३ १ २
१२०० यः सोमः कलशेष्वा अन्तः पवित्र आहितः
२उ ३ १ २
तमिन्दुः परि षस्वजे ५

२उ ३ १ २ ३ १ २र ३ १ २
१२०१ प्र वाचमिन्दुरिष्यति समुद्रस्याधि विष्टपि
२ ३ १ २ ३ १ २
जिन्वन्कोशं मधुश्चुतम् ६

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१२०२ नित्यस्तोत्रो वनस्पतिर्धेनामन्तः सबर्दुघाम्
३ १ २र ३ २
हिन्वानो मानुषा युजा ७

१ २ ३ २ ३ १ २
१२०३ आ पवमान धारया रयिँ सहस्रवर्चसम्
३ १ २ ३ १ २
अस्मे इन्दो स्वाभुवम् ८

३ २ ३ २ ३ २ ३ २उ ३ १ २र ३ २
१२०४ अभि प्रिया दिवः कविर्विप्रः स धारया सुतः
१ २ ३ १ २
सोमो हिन्वे परावति ९ ४(भे)

इति तृतीयः खराडः ३

२३ १ २ ३ १ २ ३ १ २ ३ २
१२०५ उत्ते शुष्मास ईरते सिन्धोरूर्मेरिव स्वनः
३ १ २ ३ २
वाणस्य चोदया पविम् १

३ २ ३ १ २ ३ १ २र ३ १ २
१२०६ प्रसवे त उदीरते तिस्रो वाचो मखस्युवः
२उ ३ २ ३ १ २
यदव्य एषि सानवि २

२ ३ २३ १ २ ३ १ २र ३ १ २
१२०७ अव्या वारैः परि प्रियँ हरिँ हिन्वन्त्यद्रिभिः
१ २ ३ १ २
पवमानं मधुश्चुतम् ३

१ २ ३ २३ १२
१२०८ आ पवस्व मदिन्तम पवित्रं धारया कवे
३ २ ३ १ २ ३ १ २
अर्कस्य योनिमासदम् ४

१ २ ३ १ २ ३ २ ३ १ २
१२०९ स पवस्व मदिन्तम गोभिरञ्जानो अक्तुभिः
१ २ ३ १२
एन्द्रस्य जठरं विश ५ ५(का)

इति चतुर्थः खराडः

३ २ ३ १ २र ३ १ २ ३ २३ २
१२१० अया वीती परि स्रव यस्त इन्दो मदेष्वा
३ १२ ३ १ २र
अवाहन्नवतीर्नव १

१२ ३ २ ३ १ २३ १ २ ३ १ २
१२११ पुरः सद्य इत्थाधिये दिवोदासाय शंबरम्
२ ३ २ ३ २ ३ १ २
अध त्यं तुर्वशं यदुम् २

१ २ ३ १ २ ३ १ २र ३ १२
१२१२ परि नो अश्वमश्वविद्गोमदिन्दो हिरणयवत्

१ २   ३  २ ३ १ २
क्षरा सहस्रिणीरिषः  ३   ६(हि)

३  १ २  ३ २उ   ३  २ ३  १ २
१२१३ अपघ्नन्पवते मृधोऽप सोमो अराव्णः
२  ३  १  २      ३ २
गच्छन्निन्द्रस्य निष्कृतम्  १

३ १  २  ३ १    २र३  १ २     ३  १   २र
१२१४ महो नो राय आ भर पवमान जही मृधः
१  २     ३२ ३ १ २
रास्वेन्दो वीरवद्यशः  २

१   २  ३ २  ३ २उ   ३  २  ३   १  २  ३  १   २
१२१५ न त्वा शतं च न ह्रुतो राधो दित्सन्तमा मिनन्
१ २ ३ १  २ ३  १ २
यत्पुनानो मखस्यसे  ३   ७(खा)

३  १  २    ३  १२ ३  २  ३  २ ३ १ २
१२१६ अया पवस्व धारया यया सूर्यमरोचयः
३     १   २र  ३ २
हिन्वानो मानुषीरपः  १

१ २ ३  २३  १ २ ३  १ २     ३  १   २र
१२१७ अयुक्त सूर एतशं पवमानो मनावधि
३ १ २  ३  १ २
अन्तरिक्षेण यातवे  २

३२उ     ३ २ ३ २ ३  १ २     ३   १ २
१२१८ उत त्या हरितो रथे सूरो अयुक्त यातवे
२ ३ २ ३ १ २ ३ २
इन्दुरिन्द्र इति ब्रुवन्  ३   ८(का)

इति पञ्चमः खण्डः  ५

३  १   २ ३ २ ३  १  २   ३  २ ३  १  २   ३ १ २  ३१  २
१२१९ अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम्
१   २र ३   १ २    ३ २ ३ १ २     ३ १ २    ३ २
यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः  १

२ ३ २ ३  १   २र    ३  २  ३  २  ३ २   ३ १२  ३   १   २
१२२० प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्यस्थात्

१ २ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति २

१ २र ३ १ २ ३ २उ ३ १२ ३ १ २ ३ २
१२२१ उद्यस्य ते नवजातस्य वृष्णोऽग्ने चरन्त्यजरा इधानाः
२ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २
अच्छा द्यामरुषो धूम एषि सं दूतो अग्न ईयसे हि देवान् ३ ९(टी)

१ २र ३ २ ३ २ ३ १ २
१२२२ तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे
१ २र ३ १ २
स वृषा वृषभो भुवत् १

२ ३ १ २र ३ १ २र ३ १ २र ३ २
१२२३ इन्द्रः स दामने कृत ओजिष्ठः स बले हितः
३ २ ३ २उ ३ २
द्युम्नी श्लोकी स सोम्यः २

३ २उ ३ १ २र ३ १ २ ३ १ २
१२२४ गिरा वज्रो न सम्भृतः सबलो अनपच्युतः
३ २ ३ १ २र
ववक्ष उग्रो अस्तृतः ३ १०(छे)

इति षष्ठः खण्डः ६

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २
१२२५ अध्वर्यो अद्रिभिः सुतँ सोमं पवित्र आ नय
३ १ २ ३ १ २
पुनाहीन्द्राय पातवे १

२ ३ १ २ ३ १ २ ३ २उ ३क २र
१२२६ तव त्य इन्दो अन्धसो देवा मधोर्व्याशत
१ २ ३ १ २
पवमानस्य मरुतः २

३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
१२२७ दिवः पीयूषमुत्तमँ सोममिन्द्राय वज्रिणे
३ २ ३ १ २
सुनोता मधुमत्तमम् ३ ११(खा)

३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
१२२८ धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः

१ २ ३ २उ ३ १ २र ३ २ ३ १ २ ३ २
हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजाँसि कृणुषे नदीष्वा १

२ ३ १ २ ३ १ २ ३ ३ २ऽ १ २ ३ १ २र
१२२९ शूरो न धत्त आयुधा गभस्त्योः स्व३ः सिषासन्नथिरो गविष्टिषु
१ २ ३ १ २ ३१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रस्य शुष्ममीरयन्नपस्युभिरिन्दुर्हिन्वानो अज्यते मनीषिभिः २

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २३ १ २
१२३० इन्द्रस्य सोम पवमान ऊर्मिणा तविष्यमाणो जठरेष्वा विश
१ २ ३ २३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
प्र नः पिन्व विद्युदभ्रेव रोदसी धिया नो वाजाँ उप माहि शश्वतः
३ १२(चा)

१ २ ३ २उ ३ २ ३क २र ३ २ ३ १ २
१२३१ यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः
१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे १

२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
१२३२ यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा
१ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इन्द्रा यच्छन्त्या गहि २ १३(कि)

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
१२३३ उभयँ शृणवच्च न इन्द्रो अर्वागिदं वचः
३ १ २ ३ २ ३ १ २ ३ १ २र ३ १ २
सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत् १

२उ ३ १ २ ३ १ २र ३ १ २ ३ १ २
१२३४ तँ हि स्वराजं वृषभं तमोजसा धिषणे निष्टतक्षतुः
३ २३ १ २ ३ १ २र ३ १ २ ३ २ ३ १ २
उतोपमानां प्रथमो नि षीदसि सोमकामँ हि ते मनः २ १४(ची)

इति सप्तमः खण्डः ७

१ २ ३ १ २ ३ १ २र ३ १ २
१२३५ पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः
३ १ २र ३ १ २
वायुमा रोह धर्मणा १

१ २ ३ १ २ ३ १ २ ३ १ २
१२३६ पवमान नि तोशसे रयिँ सोम श्रवाय्यम्
१ २ ३ १ २र
इन्दो समुद्रमा विश २

३ १ २ ३ १ २
१२३७ अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः
नुदस्वादेवयुं जनम् ३ १५(लि)

३ १ २ ३ १ २
१२३८ अभी नो वाजसातमँ रयिमर्ष शतस्पृहम्
इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् १

३ १ २ ३ १ २र ३ १ २ ३ १ २
१२३९ वयं ते अस्य राधसो वसोर्वसो पुरुस्पृहः
१ २र ३ १ २र ३ १ २
नि नेदिष्ठतमा इषः स्याम सुम्ने ते अध्रिगो २

२ ३ २ ३ १ २ ३ २ ३२ ३ १ २
१२४० परि स्य स्वानो अक्षरदिन्दुरव्ये मदच्युतः
२ ३ २ ३ १ २ ३२ ३ १ २र ३ २
धारा य ऊर्ध्वो अध्वरे भ्राजा न याति गव्ययुः ३ १६(ली)

१ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३ १ २र
१२४१ पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम १

३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
१२४२ शुक्रः पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्रजाभ्यः २

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २र ३ १ २
१२४३ दिवो धर्तासि शुक्रः पीयूषः सत्ये विधर्मन्वाजी पवस्व ३ १७(हि)

इत्यष्टमः खण्डः ८

१ २ ३ १ २ ३ २ ३ १ २ ३ २
१२४४ प्रेष्ठं वो अतिथिँ स्तुषे मित्रमिव प्रियम्
२ ३ २ ३ १ २र
अग्ने रथं न वेद्यम् १

३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ २
१२४५ कविमिव प्रशꣳस्यं यं देवास इति द्विता
१ २र ३ २
नि मर्त्येष्वादधुः २

१ २ ३ २ ३ १ २ ३ १ २र
१२४६ त्वं यविष्ठ दाशुषो नॄꣳपाहि शृणुही गिरः
१ १ ३ २ ३ १ २र
रक्षा तोकमुत त्मना ३ १८(यी)

१ २ ३ १ २
१२४७ एन्द्र नो गधि प्रिय सत्राजिदगोह्य
३ २उ ३ १ २ ३ १ २र ३ २
गिरिर्न विश्वतः पृथुः पतिर्दिवः १

३ १ २र ३ २ ३ २ ३ १ २
१२४८ अभि हि सत्य सोमपा उभे बभूथ रोदसी
१ २र ३ २ ३ १ २र ३ १
इन्द्रासि सुन्वतो वृधः पतिर्दिवः २

१ २र ३ १ २ ३ २ ३ १ २र
१२४९ त्वꣳ हि शश्वतीनामिन्द्र धर्ता पुरामसि
३ २उ ३ १ २ ३ १ २र ३ २
हन्ता दस्योर्मनोर्वृधः पतिर्दिवः ३ १९(फे)

३ २ ३ १ २र ३ १ २र
१२५० पुरां भिन्दुर्युवा कविरमितौजा अजायत
२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः १

२ ३ २ ३ २ ३ १ २ ३ १ २
१२५१ त्वं वलस्य गोमतोऽपावरद्रिवो बिलम्
२ ३ १ २र ३ १ २
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः २

२ ३ १ २ ३ १ २ ३ १ २र
१२५२ इन्द्रमीशानमोजसाभि स्तोमैरनूषत
३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ३ २०(ही)

इति नवमः खण्डः ९

इति पञ्चमप्रपाठके प्रथमोऽर्धः ५-१

नवमोऽध्यायः समाप्तः ९

## अथ दशमोऽध्यायः

अथ पञ्चमप्रपाठकस्य द्वितीयोऽर्धः ५

(१-२३) १ पराशरः शाक्त्यः २ शुनःशेप आजीगर्तिः स देवरातः कृत्रिमो वैश्वामित्रः ३ असितः काश्यपो देवलो वा ४, ७ राहूगण आंगिरसः ५ (१-४), ५ (प्रथम पादः) प्रियमेध आंगिरसः ५ (शेषास्त्रयः पादाः) ६ (प्रथम पादः) १४ नृमेध आंगिरसः ६ (शेषास्त्रयः पादाः) इध्मवाहो दार्ढच्युतः ८ पवित्र आंगिरसो वा वसिष्ठो वा उभौ वा ९ वसिष्ठो मैत्रावरुणिः १० वत्सः काण्वः ११ शतं वैखानसः १२ सप्तर्षयः १३ वसुर्भारद्वाजः १५ भर्गः प्रागाथः १६ भरद्वाजो बार्हस्पत्यः १७ मनुराप्सवः १८ अम्बरीषो वार्षागिरः ऋजिश्वा भारद्वाजश्च १९ अग्नयो धिष्ण्या ऐश्वराः २० अमहीयुरांगिरसः २१ त्रिशोकः काण्वः २२ गोतमो राहूगणः २३ मधुच्छन्दा वैश्वामित्रः ॥ १-७, ११-१३, १६-२० पवमानः सोमः ८ पवमानाध्येता ९, १४-१५, २१ (२-३) २२-२३ इन्द्रः ९ अग्निः २१ (१) अग्नीन्द्रौ ॥ १, ९ त्रिष्टुप् २-७, १०-११, १६, २०-२१ गायत्री ८, १८, २३ अनुष्टुप् १२ (१-२), १४, १५ प्रगाथः १३ (३), १९ द्विपदा विराट् १३ जगती १७, २२ उष्णिक् ॥

१ २ ३ १ २ ३ १ २उ ३ १ २ ३ १ २र ३ २
१२५३ अक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन्प्रजा भुवनस्य गोपाः
१ २ ३ २३ २ ३ २ ३ १ २ ३१ २र ३ १ २र
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः १

१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
१२५४ मत्सि वायुमिष्टये राधसे नो मत्सि मित्रावरुणा पूयमानः
२ ३ २ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
मत्सि शर्धो मारुतं मत्सि देवान्मत्सि द्यावापृथिवी देव सोम २

३ १ २र ३ १ २ ३ १ २र ३ २
१२५५ महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान्
१ २ ३ २ ३ १ २ ३ १ २र ३ २ ३ २ ३ १ २
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ३ १(टै)

३ २ ३ १ २र ३ १ २
१२५६ एष देवो अमर्त्यः पर्णवीरिव दीयते
३ १ २र ३ १ २
अभि द्रोणान्यासदम् १

३ १ २र३ १ २ ३ २ ३ १ २
१२५७ एष विप्रैरभिष्टुतोऽपो देवो वि गाहते
२ ३ १ २ ३ १ २
दधद्रत्नानि दाशुषे २

३ १ २र ३ २ ३ २ ३ १ २ ३ १ २
१२५८ एष विश्वानि वार्या शूरो यन्निव सत्वभिः
१ २
पवमानः सिषासति ३

३ २ ३ १ २ ३ १ २
१२५९ एष देवो रथर्यति पवमानो दिशस्यति
३ १ २ ३ २
आविष्कृणोति वग्वनुम् ४

३ २ ३ १ २३ २ ३ १ २ ३ १ २
१२६० एष देवो विपन्युभिः पवमान ऋतायुभिः
२ ३ १ २
हरिर्वाजाय मृज्यते ५

३ २ ३ २ ३ २ ३ २ ३ १ २
१२६१ एष देवो विपा कृतोऽति ह्वराँसि धावति
१ २ ३ १ २
पवमानो अदाभ्यः ६

३ २उ ३ १ २ ३ १ २र ३ १२
१२६२ एष दिवं वि धावति तिरो रजाँसि धारया
१ २ ३ १ २
पवमानः कनिक्रदत् ७

३२उ ३ १ २ ३२उ ३ १ २
१२६३ एष दिवं व्यासरत्तिरो रजाँस्यस्तृतः
१ २ ३२
पवमानः स्वध्वरः ८

३ २ ३२३ १ २ ३ २ ३ १ २ ३ २
१२६४ एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः

१ २ ३ १ २
हरिः पवित्रे अर्षति ९

३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
१२६५ एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः
१ २ ३ २
धारया पवते सुतः १० २(दू)

इति प्रथमः खण्डः १

३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
१२६६ एष धिया यात्यण्व्या शूरो रथेभिराशुभिः
२ ३ १ २ ३ २
गच्छन्निन्द्रस्य निष्कृतम् १

३ २ ३ १ २ ३ २ ३ १ २
१२६७ एष पुरू धियायते बृहते देवतातये
२ ३ १ २ ३ १ २
यत्रामृतास आशत २

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
१२६८ एतं मृजन्ति मर्ज्यमुप द्रोणेष्वायवः
३ २ ३ १ २र
प्रचक्राणं महीरिषः ३

३ २ ३ १ २र ३ २ ३ १ २ ३ २
१२६९ एष हितो वि नीयतेऽन्तः शुन्ध्यावता पथा
१ २ ३ २ ३ १ २
यदी तुञ्जन्ति भूर्णयः ४

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१२७० एष रुक्मिभिरीयते वाजी शुभ्रेभिरँशुभिः
२ ३ १ २ ३ १ २
पतिः सिन्धूनां भवन् ५

३ १ २र ३ १ २ ३ १ २ ३ २क ऽ १ २
१२७१ एष शृङ्गाणि दोधुवच्छिशीते यूथ्यो३ वृषा
३ १ २र ३ १ २
नृम्णा दधान ओजसा ६

३ १ २र ३ १ २र ३ ३ १ २र
१२७२ एष वसूनि पिब्दनः परुषा ययिवाँ अति

२ ३   १ २
अव शादेषु गच्छति ७

३ २ ३ २उ ३ २ ३ १ २ ३ १ २
१२७३ एतमु त्यं दश क्षिपो हरिँ हिन्वन्ति यातवे
३ २ ३ १ २
स्वायुधं मदिन्तमम् ८ ३(के)

इति द्वितीयः खराडः २

३ २ ३ २उ ३ २उ ३ १ २
१२७४ एष उ स्य वृषा रथोऽव्या वारेभिरव्यत
२ ३ १ २ ३ १ २
गच्छन्वाजँ सहस्त्रिणम् १

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
१२७५ एतं त्रितस्य योषणो हरिँ हिन्वन्त्यद्रिभिः
२ ३ १ २ ३ १ २
इन्दुमिन्द्राय पीतये २

३ १ २र ३ २ ३ २उ ३ १ २
१२७६ एष स्य मानुषीष्वा श्येनो न विक्षु सीदति
१ २ ३२उ ३ १ २
गच्छं जारो न योषितम् ३

३२उ ३ १ २र ३ १ २र
१२७७ एष स्य मद्यो रसोऽव चष्टे दिवः शिशुः
२उ ३ २३ १ २
य इन्दुर्वारमाविशत् ४

३२उ ३ १ २ ३ १ २र ३ २
१२७८ एष स्य पीतये सुतो हरिरर्षति धर्णसिः
२ ३ १ २ ३ २ ३ २
क्रन्दन्योनिमभि प्रियम् ५

३२उ ३ २ ३ १ २ ३ १ २ ३ १ २
१२७९ एतं त्यँ हरितो दश मर्मृज्यन्ते अपस्युवः
२ ३ १ २ ३ १ २
याभिर्मदाय शुम्भते ६ ४(वी)

इति तृतीयः खराडः ३

३ २ ३ २ ३ १ २र ३ १ २र ३ १ २
१२८० एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः
२ ३ २३ १ २
अव्यं वारं वि धावति १

३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
१२८१ एष पवित्रे अक्षरत्सोमो देवेभ्यः सुतः
२ ३ १ २ ३ २
विश्वा धामान्याविशन् २

३ २ ३ १ २ ३ २ ३ २ ३ १ २
१२८२ एष देवः शुभायतेऽधि योनावमर्त्यः
३ १ २ ३ १ २
वृत्रहा देववीतमः ३

३२उ ३ १ २ ३ १ २ ३ १ २ ३ २
१२८३ एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः
३ १ २र
अभि द्रोणानि धावति ४

३ १ २र ३ १ २ ३ २ ३ १ २
१२८४ एष सूर्यमरोचयत्पवमानो अधि द्यवि
३ १ २ ३ १ २र
पवित्रे मत्सरो मदः ५

३ १ २र ३ १ २ ३ १ २
१२८५ एष सूर्येण हासते संवसानो विवस्वता
१ २ ३ १ २र
पतिर्वाचो अदाभ्यः ६ ५(के)

इति चतुर्थः खण्डः ४

३ २ ३ २३ १ २ ३ २३ १ २
१२८६ एष कविरभिष्टुतः पवित्रे अधि तोशते
३ २उ ३ १ २
पुनानो घ्नन्नप द्विषः १

३ १ २र ३ १ २ ३ १ २र
१२८७ एष इन्द्राय वायवे स्वर्जित्परि षिच्यते
३ १ २ ३ १ २
पवित्रे दक्षसाधनः २

३२उ ३ १ २ ३ २ ३ १ २र ३ २
१२८८ एष नृभिर्वि नीयते दिवो मूर्धा वृषा सुतः
२ ३ १२ ३ २
सोमो वनेषु विश्ववित् ३

३ २ ३ १२ ३ १ २ ३ २
१२८९ एष गव्युरचिक्रदत्पवमानो हिरण्ययुः
१ २ ३ १ २र
इन्दुः सत्राजिदस्तृतः ४

३ २ ३क २र ३ १ २ ३ २ ३ १ २
१२९० एष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः
३ २उ ३ २ ३ १
पुनान इन्दुरिन्द्रमा ५

३ २ ३ १ २ ३ १ २ ३ १ २
१२९१ एष शुष्म्यदाभ्यः सोमः पुनानो अर्षति
३ १२ ३ २
देवावीरघशँसहा ६ ६(गु)

इति पञ्चमः खण्डः

२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
१२९२ स सुतः पीतये वृषा सोमः पवित्रे अर्षति
३ १ २र ३ २
विघ्नन्रक्षाँसि देवयुः १

२ ३ १ २ ३ १ २र ३ २
१२९३ स पवित्रे विचक्षणो हरिरर्षति धर्णसिः
३ २उ ३ १ २
अभि योनिं कनिक्रदत् २

२ ३ १ २ ३ २ ३ १ २र ३ १ २
१२९४ स वाजी रोचनं दिवः पवमानो वि धावति
३ १ २र ३ १ २
रक्षोहा वारमव्ययम् ३

२ ३२उ ३ १ २ ३ १ २
१२९५ स त्रितस्याधि सानवि पवमानो अरोचयत्
३ २ ३ १ २ ३ २
जामिभिः सूर्यँसह ४

१ २३ १ २र ३ १ २ ३ १ २र
१२९६ स वृत्रहा वृषा सुतो वरिवोविददाभ्यः
२ ३ १ २
सोमो वाजमिवासरत् ५

२ ३ २ ३ १ २ ३ २ऽ १ २र
१२९७ स देवः कविनेषितो३ऽभि द्रोणानि धावति
२ ३ १ २ ३ १ २
इन्दुरिन्द्राय मँहयन् ६ ७(खे)

इति षष्ठः खराडः ६

१ २ ३ २३ १ २र ३ १ २३ १ २
१२९८ यः पावमानीरध्येत्यृषिभिः सम्भृतँरसम्
२ ३ २ ३ १ २ ३ १ २ ३ १ २
सर्वँ स पूतमश्नाति स्वदितं मातरिश्वना १

३ २उ ३ १ २र ३ १ २३ १ २
१२९९ पावमानीर्यो अध्येत्यृषिभिः सम्भृतँरसम्
२ ३ १२ ३२ ३ १ २र ३ २
तस्मै सरस्वती दुहे क्षीरँसर्पिर्मधूदकम् २

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१३०० पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
ऋषिभिः संभृतो रसो ब्राह्मणेष्वमृतँ हितम् ३

३ १ २ ३ २ ३ १ २र ३ २
१३०१ पावमानीर्दधन्तु न इमं लोकमथो अमुम्
२ ३ १ २ ३ २ ३ २ ३ १ २
कामान्त्समर्धयन्तु नो देवीर्देवैः समाहृताः ४

१ २ ३ २ ३ १ २ ३ १ २ ३ २३ १ २
१३०२ येन देवाः पवित्रेणात्मानं पुनते सदा
१ २ ३ १ २ ३ १ २
तेन सहस्रधारेण पावमानीः पुनन्तु नः ५

३ १ ३ १ २ ३ १ २ ३ २
१३०३ पावमानीः स्वस्त्ययनीस्ताभिर्गच्छति नान्दनम्
१ २ ३ १ २ ३ १ २
पुरायाँश्च भक्षान्भक्षयत्यमृतत्वं च गच्छति ६ ८(ती)

इति सप्तमः खराडः ७

१ २ ३ १ २र ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ २
१३०४ अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
चित्रभानुँ रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् १

२ ३ १ ३र ३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
१३०५ स मह्ना विश्वा दुरितानि साह्वानग्नि ष्टवे दम आ जातवेदाः
१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
स नो रक्षिषद्दुरितादवद्यादस्मान्गृणत उत नो मघोनः २

१ २र ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
१३०६ त्वं वरुण उत मित्रो अग्ने त्वां वर्धन्ति मतिभिर्वसिष्ठाः
१ २र ३ १ २ ३ १ २ ३ २ ३ १ २
त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिः सदा नः ३ ९(ही)

३ २उ ३ १ २र ३ १ २ ३ १ २
१३०७ महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव
१ २ ३ १ २
स्तोमैर्वत्सस्य वावृधे १

२ ३ २ ३ १ २र ३ १ २ ३ २ ३ १ २
१३०८ कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम्
३ १ २ ३ १ २
जामि ब्रुवत आयुधा २

३ २ ३ २ ३ १ २ ३ १ २र ३ १ २
१३०९ प्रजामृतस्य पिप्रतः प्र यद्भरन्त वह्नयः
१ २ ३ २ ३ १ २
विप्रा ऋतस्य वाहसा ३ १०(टि)

इति अष्टमः खण्डः ८

१ २ ३ १ २ ३ १ २ ३ १ २
१३१० पवमानस्य जिघ्नतो हरेश्चन्द्रा असृक्षत
३ १ २ ३ १ २
जीरा अजिरशोचिषः १

३ २ ३ १ २ ३ १ २ ३ १ २
१३११ पवमानो रथीतमः शुभ्रेभिः शुभ्रशस्तमः
१ २ ३ १ २
हरिश्चन्द्रो मरुद्गणः २

१ २ ३क २र ३ १ २ ३ १ २
१३१२ पवमान व्यश्नुहि रश्मिभिर्वाजसातमः
१ २ ३ २ ३ १ २
दधत्स्तोत्रे सुवीर्यम् ३ ११(ह)

२ ३ १ २ ३२उ ३ १ २ ३ २ ३ २
१३१३ परीतो षिञ्चता सुतँ सोमो य उत्तमँ हविः
३ १ २र ३ २ ऽ २उ ३ २ ३ २ ३ १ २
दधन्वाँ यो नर्यो अप्स्व३न्तरा सुषाव सोममद्रिभिः १

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१३१४ नूनं पुनानोऽविभिः परि स्रवादब्धः सुरभिन्तरः
३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
सुते चित्वाप्सु मदामो अन्धसा श्रीणन्तो गोभिरुत्तरम् २

१ २ ३ १ २र ३ १ २ ३ २ ३ १ २ ३ २
१३१५ परि स्वानश्चक्षसे देवमादनः क्रतुरिन्दुर्विचक्षणः ३ १२(खा)

१ २ ३ १ २ ३ २उ ३ २ ३ १ २ ३ २ ३ १ २र
१३१६ असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत्
२ २उ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
पुनानो वारमत्येष्यव्ययँ श्येनो न योनिं घृतवन्तमासदत् १

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
१३१७ पर्जन्यः पिता महिषस्य पर्णिनो नाभा पृथिव्या गिरिषु क्षयं दधे
१ २३ १ २ ३ २उ ३ १ २३ १ २र ३ १ २ ३ २
स्वसार आपो अभि गा उदासरन्त्सं ग्रावभिर्वसते वीते अध्वरे २

३ १ २ ३ १ २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २र
१३१८ कविर्वेधस्या पर्येषि माहिनमत्यो न मृष्टो अभि वाजमर्षसि
३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
अपसेधन्दुरिता सोम नो मृड घृता वसानः परि यासि निर्णिजम् ३ १३(गू)

इति नवमः खण्डः ९

१ २ ३ २ ३ १ २र
१३१९ श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत
१ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २र
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः १

१ २ ३ १ २र ३ १ २र ३ १ २
१३२० अलर्षिरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः
१ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २
यो अस्य कामं विधतो न रोषति मनो दानाय चोदयन् २ १४(लू)

१ २ ३ १ २ ३ १ २ ३ १ २
१३२१ यत इन्द्र भयामहे ततो नो अभयं कृधि
१ २ ३ २उ ३ १ २ ३ २ ३ २उ ३ १ २र
मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि १

१ २र ३ १ २ ३२उ ३ १ २ ३ २
१३२२ त्वँ हि राधस्पते राधसो महः क्षयस्यासि विधर्ता
१ २ ३ १ २ ३ १ २
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे २ १५(बा)

इति दशमः खण्डः १०

१ २ ३ २ ३ १ २र ३ २
१३२३ त्वँ सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे
१ २ ३ १ २
पवस्व मँहयद्रयिः १

२ ३ २ ३ १ २ ३ १ २ ३ १ २
१३२४ त्वँ सुतो मदिन्तमो दधन्वान्मत्सरिन्तमः
१ २ २ १ २र
इन्दुः सत्राजिदस्तृतः २

१ २ ३ १ २र ३क २र ३ १ २
१३२५ त्वँ सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत्
३ २ ३ २ ३ १ २
द्युमन्तँ शुष्ममा भर ३ १६(ली)

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१३२६ पवस्व देववीतय इन्दो धाराभिरोजसा
२ ३ २ ३ १ २
आ कलशं मधुमान्त्सोम नः सदः १

१ २ ३ १ २ ३ २ ३ २ ३ १ २
१३२७ तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुः
२ ३ १ २ ३ १ २ ३ १ २
त्वां देवासो अमृताय कं पपुः २

१ २ ३ १ २ ३ २
१३२८ आ नः सुतास इन्दवः पुनाना धावता रयिम्
३ १ २ ३ १२
वृष्टिद्यावो रीत्यापः स्वर्विदः ३ १७(वौ)

२ ३ १ २ ३ १ २र ३ १ २ ३ १२
१३२९ परि त्यँहर्यतँहरिं बभ्रुं पुनन्ति वारेण
२ ३ २उ ३ २उ ३ १ २ ३ १ २र
यो देवान्विश्वाँइत्परि मदेन सह गच्छति १

२उ ३ १ २ ३ १ २ ३ १ २
१३३० द्विर्यं पञ्च स्वयशसँ सखायो अद्रिसँहतम्
३ १ २र ३ १ २ ३ १ २ ३ १ २
प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त ऊर्मयः २

१ २ ३ ३ १ २ ३ १ २र
१३३१ इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे
१२ ३ १ २ ३ १ २ ३ १ २
नरे च दक्षिणावते वीराय सदनासदे ३ १८(जी)

१ २ ३२उ ३ २ ३ २ ३ २ ३ १ २र
१३३२ पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय १

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
१३३३ प्र ते सोतारो रसं मदाय पुनन्ति सोमं महे द्युम्नाय २

१ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
१३३४ शिशुं जज्ञानँ हरिं मृजन्ति पवित्रे सोमं देवेभ्य इन्दुम् ३ १९(का)

२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २र
१३३५ उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम्
१ २ ३ १ २
इन्दुं देवा अयासिषुः १

१ २र ३ १ २ ३ २ ३ १ २
१३३६ तमिद्वर्धन्तु नो गिरो वत्सँसँशिश्वरीरिव
१ २र ३ १ २
य इन्द्रस्य हृदँसनिः २

१ २ ३ १ २र ३ १ २ ३ २ ३ १ २
१३३७ अर्षा नः सोम शं गवे धुक्षस्व पिप्युषीमिषम्

१ २ ३१२
वर्धा समुद्रमुक्थ्य ३ २०(ही)

इति एकादशः खराडः ११

२ ३ २ ३ २ ३ १२ ३१ २ ३ १ २३२
१३३८ श्रा घा ये श्रग्निमिन्धते स्तृणन्ति बर्हिरानुषक्
२ ३ २ ३ २ ३ १ २
येषामिन्द्रो युवा सखा १

३२उ ३ १ २ ३ १ २ ३ २ ३ १ २र
१३३९ बृहन्निदिध्म एषां भूरि शस्त्रं पृथुः स्वरुः
२ ३ २ ३ २ ३ १ २
येषामिन्द्रो युवा सखा २

१ २ ३ २ ३ २उ ३ २३ १ २ ३ १ २
१३४० श्रयुद्ध इद्युधा वृतँ शूर श्राजति सत्वभिः
२ ३ २ ३ २ ३ १ २
येषामिन्द्रो युवा सखा ३ २१(ठ)

२उ ३ २ ३१ २३ २ ३ १ २ ३ १ २
१३४१ य एक इद्विदयते वसु मर्ताय दाशुषे
१ २ ३ १२ ३ १ २ ३ २
ईशानो श्रप्रतिष्कुत इन्द्रो श्रङ्ग १

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
१३४२ यश्चिद्धि त्वा बहुभ्य श्रा सुतावाँश्राविवासति
३ १ २र ३ २ ३ १ २ ३ २
उग्रं तत्पत्यते शव इन्द्रो श्रङ्ग २

३ १ २र ३ १ २ ३ १ २र
१३४३ कदा मर्तमराधसं पदा ज्ञुम्पमिव स्फुरत्
३ १ २र ३ २३ १ २ ३ २
कदा नः शुश्रवद्गिर इन्द्रो श्रङ्ग ३ २२(कि)

१ २ ३ १ २र ३ २ ३ १ २
१३४४ गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः
३ १ २ ३ २३ १ २
ब्रह्माणस्त्वा शतक्रत उद्वँशमिव येमिरे १

२उ ३ १ २र ३ १ २र ३ १ २
१३४५ यत्सानोः सान्वारुहो भूर्यस्पष्ट कर्त्वम्
२उ ३ १ २ ३ १ २ ३ १ २
तदिन्द्रो श्रर्थं चेतति यूथेन वृष्णिरेजति २

३ २उ ३ २ ३ २ ३ १ २ ३ २
१३४६ युङ्क्वा हि केशिना हरी वृषणा कद्व्यप्रा
१ २ ३ १ २र
अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ३ २३(बी)

इति द्वादशः खण्डः १२ इति पञ्चमप्रपाठके द्वितीयोऽर्धः पञ्चमप्रपाठकश्च समाप्तः

इति दशमोऽध्यायः

अथ एकादशोऽध्यायः

अथ षष्ठप्रपाठके प्रथमोऽर्धः ६

(१-११) मेधातिथिः काण्वः २, १० वसिष्ठो मैत्रावरुणिः ३ प्रगाथः काण्वः ४ पराशरः शाक्त्यः ५ प्रगाथो घौरः काण्वः ६ मेध्यातिथिः काण्वः ७ त्र्यरुणस्त्रैवृष्णः त्रसदस्युः पौरुकुत्स्य ८ अग्नयो धिष्ण्या ऐश्वराः ९ हिरण्यस्तूप आङ्गिरसः १० सार्पराज्ञी ॥ १ आप्रीसूक्तं २ आदित्यः ३, ५-६ इन्द्रः ४, ७-९ पवमानः सोमः १० अग्निः ११ आत्मा सुर्यो वा ॥ १-३, ११ गायत्री ४ त्रिष्टुप् ५-६ प्रगाथः ७ पिपीलिकमध्या अनुष्टुप् ८ द्विपदा विराट् ९ जगती १० विराट् ॥

१ २ ३ १ २ ३ १ २ ३ १ २
१३४७ सुषमिद्धो न आ वह देवाँ अग्ने हविष्मते
१ २ ३ १ २
होतः पावक यक्षि च १

१ २ ३ २ ३ १ २
१३४८ मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे
३ १ २ ३ १ २
अद्या कृणुह्यूतये २

२ ३ १ २ ३ २ ३ २ ३ २ ३ १ २र
१३४९ नराशँसमिह प्रियमस्मिन्यज्ञ उप ह्वये
१ २ ३ १ २
मधुजिह्वँ हविष्कृतम् ३

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
१३५० अग्ने सुखतमे रथे देवाँ ईडित आ वह

२ ३ २ ३ १ २
असि होता मनुर्हितः ४ १(रा)

२ ३२उ ३ २ ३१ २ ३ १ २ ३ २
१३५१ यदद्य सूर उदितेऽनागा मित्रो अर्यमा
३ १ २ ३ १ २र
सुवाति सविता भगः १

३ १२ ३ २उ ३ १ २र
१३५२ सुप्रावीरस्तु स क्षयः प्र नु यामन्त्सुदानवः
२ ३ १ २ ३ १ २
ये नो अँहोऽतिपिप्रति २

३ २ ३ २ ३ १ २ ३१ २ ३ २ ३ २
१३५३ उत स्वराजो अदितिरदब्धस्य व्रतस्य ये
३ १ २र
महो राजान ईशते ३ २(खि)

१ २ ३ १ २ ३ १ २र
१३५४ उ त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः
१ २ ३ १ २
अव ब्रह्मद्विषो जहि १

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१३५५ पदा पणीनराधसो नि बाधस्व महाँ असि
२उ ३ २ ३ १ २र
न हि त्वा कश्च न प्रति २

१ २ ३ २ ३ २ ३ १ २र
१३५६ त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम्
२उ ३ १ २
त्वँ राजा जनानाम् ३ ३(ठि)

इति प्रथमः खण्डः १

१ २र ३ १ २ ३ २ २ ३ १ २र ३ १ २ ३ १ २
१३५७ आ जागृविर्विप्र ऋतं मतीनाँ सोमः पुनानो असदच्चमूषु
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
सपन्ति यं मिथुनासो निकामा अध्वर्यवो रथिरासः सुहस्ताः १

१ २ ३२उ ३ २३ १ २ ३ १ २र ३ १ २ ३ १ २र
१३५८ स पुनान उप सूरे दधान ओभे अप्रा रोदसी वी ष आवः

३ २ ३ १ २ ३ १ २ ३ २ ३ १ २र ३ २ ३ १ २र
प्रिया चिद्यस्य प्रियसास ऊती सतो धनं कारिणे न प्र यꣳसत् २

१ २ ३ १ २र ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
१३५९ स वर्धिता वर्धनः पूयमानः सोमो मीढ्वाꣳ अभि नो ज्योतिषावित्
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २र ३ २
यत्र नः पूर्वे पितरः पदज्ञाः स्वर्विदो अभि गा अद्रिमिष्णन् ३ ४(तै)

१ २ ३ १ २र ३ १ २ ३ १ २
१३६० मा चिदन्यद्वि शꣳसत सखायो मा रिषण्यत
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
इन्द्रमित्स्तोता वृषणꣳ सचा सुते मुहुरुक्था च शꣳसत १

३ १ २ ३ १ २ ३ २ ३ १ २र ३ १ २
१३६१ अवक्रक्षिणं वृषभं यथा जुवं गां न चर्षणीसहम्
३ १ २ ३ १ २ ३१ २र ३ १ २
विद्वेषणꣳ संवननमुभयङ्करं मꣳहिष्ठमुभयाविनम् २ ५(यी)

२ ३ १ २र ३ २३ १ २
१३६२ उदु त्ये मधुमत्तमा गिरः स्तोमास ईरते
३ १ २ ३ १ २र ३ २ ३ १ २
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव १

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
१३६३ कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमाशत
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रꣳ स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरन् २ ६(ला)

२ ३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
१३६४ पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः
३ २ ३१ २ ३ १ २
द्विषस्तरध्या ऋणया न ईरसे १

१ २ ३ १ २ ३ १ २ ३ २३ १ २ ३ १ २
१३६५ अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः
१ २ ३ १ २ ३ १२
गोजीरया रꣳहमाणः पुरन्ध्या २

२ ३ १ २ ३१ २ ३ १ २
१३६६ अनु हि त्वा सुतꣳ सोम मदामसि महे समर्यराज्ये
वाजाꣳ अभि पवमान प्र गाहसे ३ ७(ल)

२ ३ १ २ १
१३६७ परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय १

३ १ २र ३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
१३६८ एवामृताय महे क्षयाय स शुक्रो अर्ष दिव्यः पीयूषः २

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
१३६९ इन्द्रस्ते सोम सुतस्य पेयात्क्रत्वे दक्षाय विश्वे च देवाः ३ ८(ला)

इति द्वितीयः खण्डः २

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१३७० सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुतः साकमीरते
१ २ ३२उ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २
तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किं चन १

१ २ ३ २ ३ १ २ ३ २३ १ २ ३ १ २ ३ २ ३ १ २
१३७१ उपो मतिः पृच्यते सिच्यते मधु मन्द्राजनी चोदते अन्तरासनि
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २उ ३ १ २
पवमानः सन्तनिः सुन्वतामिव मधुमान्द्रप्सः परि वारमर्षति २

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ २
१३७२ उक्षा मिमेति प्रति यन्ति धेनवो देवस्य देवीरुप यन्ति निष्कृतम्
१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ २उ ३ १ २
अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत ३ ९(ग)

३ २उ ३ १ २ ३ २ ३ १ २ ३ २
१३७३ अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम्
३ १ २ ३ १ २ ३ २
दूरेदृशं गृहपतिमथव्युम् १

२ ३ २उ ३ १ २ ३क २र ३ २ ३ १ २ ३ १ २
१३७४ तमग्निमस्ते वसवो न्यृण्वन्त्सुप्रतिचक्षमवसे कुतश्चित्
३ २ ३ २उ ३ २ ३ १ २
दक्षाय्यो यो दम आस नित्यः २

१ २ ३ १ २र ३क २र
१३७५ प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ
१ २र ३ १ २ ३ १ २
त्वां शश्वन्त उप यन्ति वाजाः ३ १०(डी)

१ २र ३ १ २ ३ १२ ३२
१३७६ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः
३ १२ ३ १ २
पितरं च प्रयन्त्स्वः १

३ १ २ ३ २उ ३ १ २ ३ २
१३७७ अन्तश्चरति रोचनास्य प्राणादपानती
२र ३ १ २र
व्यख्यन्महिषो दिवम् २

३ २उ ३ १ २ ३ १ २३ १ २
१३७८ त्रिँशद्धाम वि राजति वाक्पतङ्गाय धीयते
२ ३ २ ३२३ १ २
प्रति वस्तोरह द्युभिः ३ ११(छि)

इति तृतीयः खण्डः ३

इति षष्ठप्रपाठके प्रथमोऽर्धः ६-१

एकादशोऽध्यायः समाप्तः ११

अथ द्वादशोऽध्यायः

अथ षष्ठप्रपाठके द्वितीयोऽर्धः

(१-२०) १ (१-२) गोतमो राहूगणः १(३), ८, ११ वसिष्ठो मैत्रावरुणिः २, ७ भरद्वाजो बार्हस्पत्यः ३ प्रजापतिर्वैश्वामित्रो वाच्यो वा ४, १३ सोभरिः काण्वः ५ मेधातिथि-मेध्यातिथी काण्वौ ६ (१) ऋजिश्वा भारद्वाजः ६ (२) ऊर्ध्वसद्मा आंगिरसः ९ तिरश्चीराङ्गिरसः १० सुतंभर आत्रेयः १२, १९ नृमेध पुरुमेधावाङ्गिरसौ १४ शुनःशेप आजीगर्तिः १५ नोधा गौतमः १६ मेध्यातिथिः काण्वः १७ रेणुर्वैश्वामित्रः १८ कुत्स आङ्गिरसः २० अगस्त्यो मैत्रावरुणः ॥ १-२, ७, १०, १३-१४ अग्निः ३, ६, ८, ११, १५, १७-१८ पवमानः सोमः ४, ५, ८, १२, १६, १९, २०, इन्द्रः ॥ १-२, ७, १०, १४ गायत्री ३, ९, १९ (१-२) २० (२-३) अनुष्टुप् ४, ६-१३ काकुभः प्रगाथः ५, १९ (३) बृहती ८, ११, १५, १८ त्रिष्टुप् १२, १५ प्रगाथः १७ जगती २० (१) स्कन्धोग्रीवी बृहती ॥

३ १ २ ३१ २र ३ १ २
१३७९ उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये
३२ ३ १ २ ३ २
आरे अस्मे च शृणवते १

१ २र ३ १ २ ३ १ २ ३ १ २
१३८० यः स्त्रीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु
१२ ३ २३ १ २
अरक्षद्दाशुषे गयम् २

२ ३ १ २ ३ १ २३ १ २ ३ १ २
१३८१ स नो वेदो अमात्यमग्नी रक्षतु शन्तमः
३ २उ ३ १ २
उतास्मान्पात्वँहसः ३

३१ २ ३ २ ३ २३ १ २३ १ २
१३८२ उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि
३ १ २र
धनञ्जयो रणेरणे ४ १(ति)

इति प्रथमः खण्डः १

१ २ ३ १ २र ३ १ २
१३८३ अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः
२३ १ २ ३ १ २
अरं वहन्त्याशवः १

१ २ ३ १ २ ३ १ २र ३ १ २
१३८४ अच्छा नो याह्या वहाभि प्रयाँसि वीतये
२ ३ १ २र
आ देवान्त्सोमपीतये २

१ २ ३ १ २र ३ १ २
१३८५ उदग्ने भारत द्युमदजस्रेण दविद्युतत्
२ ३ १ ३
शोचा वि भाह्यजर ३ २(यी)

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २र
१३८६ प्र सुन्वानायान्धसो मर्तो न वष्ट तद्वचः
२३ १ २ ३ १ २ ३ २ ३ १ २र
अप श्वानमराधसँ हता मखं न भृगवः १

२ ३ १ २र ३२उ ३ २ ३क २र
१३८७ आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः
१२ ३ १ २र ३ २ २र ३ १ २
सरञ्जारो न योषणां वरो न योनिमासदम् २

२ ३ १ २ ३ १ २ ३ २उ ३ २ ३ १ २
१३८८ स वीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी
१ २ ३ १ २ ३ १ २र ३ १ २
हरिः पवित्रे अव्यत वेधा न योनिमासदम् ३(खै)

३ २ ३ १ २र ३ १ २ ३ १ २
१३८९ अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि
३ १ २ ३ १ २
युधेदापित्वमिच्छसे १

१ २ ३ १ २ ३ १ २ ३ १ २ ३क२र
१३९० न की रेवन्तँसख्याय विन्दसे पीयन्ति ते सुराश्वः
३ २ ३ १ २ ३ १ २र ३ २उ ३ १ २
यदा कृणोषि नदनुँसमूहस्यादित्पितेव हूयसे २ ४(पि)

१ २ ३ २ ३ २ ३ २ ३ १ २र ३ १ २
१३९१ आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये १

२ ३ १ २ ३ २ ३ १ २ ३ १ २
१३९२ आ त्वा रथे हिरण्यये हरी मयूरशेप्या
३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
शितिपृष्ठा वहतां मध्वो अन्धसो विवक्षणस्य पीतये २

२ ३ २ऽ १ २ ३ १ २ ३ १ २
१३९३ पिबा त्व३स्य गिर्वणः सुतस्य पूर्वपा इव
१ २ ३ १ २ ३ १ २ ३ २उ ३ १ २
परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते ३ ५(प)

१ २ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ १ २
१३९४ आ सोता परि षिञ्चताश्वं न स्तोममप्तुरँ रजस्तुरम्
३ १ २ ३ १ २
वनप्रक्षमुदप्रुतम् १

३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
१३९५ सहस्रधारं वृषभं पयोदुहं प्रियं देवाय जन्मने

३ २३ २ ३१ २ ३ १ २र ३ २ ३ २ ३ २
ऋतेन य ऋतजातो विवावृधे राजा देव ऋतं बृहत् २ ६(या)

इति द्वितीयः खराडः २

३ २ ३ १ २ ३ १ २ ३ १ २
१३९६ अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया
१ २ ३ १ २र
समिद्धः शुक्र आहुतः १

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १२
१३९७ गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे
१ २ ३ २ ३ २ ३ २
सीदन्नृतस्य योनिमा २

१ २ ३ २ ३ १ २३ १ २ ३ १ २
१३९८ ब्रह्म प्रजावदा भर जातवेदो विचर्षणे
२ ३ २ ३ १ २ ३ २
अग्ने यद्दीदयद्दिवि ३ ७(व)

३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
१३९९ अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम्
३ २ ३ २३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
सुतः पवित्रं पर्येति रेभन्मितेव सद्म पशुमन्ति होता १

३ १ २र ३ २ऽ १ २ ३ २ ३ २ ३ १ २ ३ १ २
१४०० भद्रा वस्त्रा समन्या३ वसानो महान्कविर्निवचनानि शꣳसन्
१ २ ३क २र ३ १ २ ३ १ २र ३ १ २
आ वच्यस्व चम्वोः पूयमानो विचक्षणो जागृविर्देववीतौ २

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
१४०१ समु प्रियो मृज्यते सानो अव्ये यशस्तरो यशसां क्षैतो अस्मे
३ १ २३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
अभि स्वर धन्वा पूयमानो यूयं पात स्वस्तिभिः सदा नः ३ ८(रि)

२ ३ २ ३ १ २ ३ २ ३ २३ १ २
१४०२ एतो न्विन्द्रꣳस्तवाम शुद्धꣳशुद्धेन साम्ना
३ २३ १ २३ १ २ ३ २ ३ १ २
शुद्धैरुक्थैर्वावृध्वाꣳसꣳ शुद्धैराशीर्वान्ममत्तु १

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१४०३ इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः

३ २ ३ १ २र ३ १ २
शुद्धो रयिं वि धारय शुद्धो ममद्धि सोम्य २

१ २ ३ १ २र ३ २ ३ १ २र ३ १ २
१४०४ इन्द्र शुद्धो हि नो रयिँ शुद्धो रत्नानि दाशुषे
३ २ ३ १ २ ३ १ २र
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजँ सिषाससि ३ ९(यी)

इति तृतीयः खण्डः ३

३ १ २र ३ २ ३ १ २ ३ १ २
१४०५ अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः
३ १ २ ३ १ २
देवस्य द्रविणस्य वः १

३ १ २ ३ २ ३ २ ३ १ २र ३ २
१४०६ अग्निर्जुषत नो गिरो होता यो मानुषेष्वा
१ २ ३ २ ३ १ २
स यक्षद्दैव्यं जनम् २

१ २ ३ १ २ ३ २ ३ २ ३ १ २
१४०७ त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः
१ २ ३ १ २र
त्वया यज्ञं वि तन्वते ३ १०(रि)

३ १ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २
१४०८ अभि त्रिपृष्ठं वृषणं वयोधामाङ्गोषिणमवावशंत वाणीः
२ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
वना वसानो वरुणो न सिन्धुर्वि रत्नधा दयते वार्याणि १

१ २ ३ १ २ ३ १ २ ३ १ ३ १ २ ३ १ २
१४०९ शूरग्रामः सर्ववीरः सहावान् जेता पवस्व सनिता धनानि
३ १ २ ३ १ २ ३ १ २र ३ १ २र ३ १ २
तिग्मायुधः क्षिप्रधन्वा समत्स्वषाढः साह्वान्पृतनासु शत्रून् २

३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
१४१० उरुगव्यूतिरभयानि कृण्वन्त्समीचीने आ पवस्वा पुरन्धी
३ १ २र ३ २ ३ २ १ २र ३ २ ३ २ ३ १ २
अपः सिषासन्नुषसः स्व३र्गाः सं चिक्रदो महो अस्मभ्यं वाजान् ३ ११(५)

१ २ ३ १ २ ३ १ २र ३ १ २
१४११ त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः

२ ३ १ २ ३ २उ ३ २ ३ १ २ ३ १ २
त्वं वृत्राणि हँस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः १

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१४१२ तमु त्वा नूनमसुर प्रचेतसँ राधो भागमिवेमहे
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन् २ १२(त)

१ २ ३ १ २ ३ १ २र ३ १ २
१४१३ यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम्
३ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम् १

३ १ २र ३ १ २ ३ १ २ ३ २ ३ १ २
१४१४ अपां नपातँ सुभगँ सुदीदितिमग्निमु श्रेष्ठशोचिषम्
१ २ ३ २ ३ १ २ ३ २ ३ २उ ३ १ २ ३ २
स नो मित्रस्य वरुणस्य सो अपामा सुम्नं यक्षते दिवि २ १३(ता)

इति चतुर्थः खण्डः ४

१ २ ३ २उ ३ २ ३ १ २ ३ २ ३ २
१४१५ यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः
२उ ३ १ २ ३ १ २
स यन्ता शश्वतीरिषः १

१ २ ३ १ २र
१४१६ न किरस्य सहन्त्य पर्येता कयस्य चित्
१ २ ३ १ २
वाजो अस्ति श्रवाय्यः २

१ २र ३ १ २ ३ १ २ ३ १ २
१४१७ स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता
१ २ ३ १ २
विप्रेभिरस्तु सनिता ३ १४(ठा)

३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
१४१८ साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः
२ ३ १ २ ३ १ २र ३ १ २ ३ २ ३ २ ३ २
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी १

२ ३ २ ३ १ २र ३ १ २र ३ १ २ ३ २
१४१९ सं मातृभिर्न शिशुर्वावशानो वृषा दधन्वे पुरुवारो अद्भिः

२ ३ १ २र ३ १ २ ३१ २र ३ १ २ ३ १ २
मर्यो न योषामभि निष्कृतं यन्त्सं गच्छते कलश उस्रियाभिः २

३१ २र ३ २३१ २ ३ २ ३ १ २ ३ २
१४२० उत प्र पिप्य ऊधरघ्न्याया इन्दुर्धाराभिः सचते सुमेधाः
३ २३ २३ १२ ३२ ३ १ २ ३ १ २ ३२ ३ २
मूर्धानं गावः पयसा चमूष्वभि श्रीणन्ति वसुभिर्न निक्तैः ३ १५(वू)

१ २ ३१ २ ३ २ ३ १ २ ३ १ २
१४२१ पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः
३ १ २ ३ १ २ ३ २ऽ १ २ ३ १ २
आपिर्नो बोधि सधमाद्ये वृधे३ऽस्माँ अवन्तु ते धियः १

३ १ २ ३ २ ३ १ २ ३ १ २र ३ १ २
१४२२ भूयाम ते सुमतौ वाजिनो वयं मा न स्तरभिमातये
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अस्मां चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामय २ १६(ल)

१२ ३ २ ३ १ २ ३ २ ३ १२ ३ १ ३
१४२३ त्रिरस्मै सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि
३ २३ १ २र ३ २ ३ १ २ ३ २३१ २र
चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत १

१ २र ३ १ २ ३ १ २ ३२उ ३ १ २ ३ १ २
१४२४ स भक्षमाणो अमृतस्य चारुण उभे द्यावा काव्येना वि शश्रथे
१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
तेजिष्ठा अपो मँहना परि व्यत यदी देवस्य श्रवसा सदो विदुः २

१ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २र
१४२५ ते अस्य सन्तु केतवोऽमृत्यवोऽदाभ्यासो जनुषी उभे अनु
१ २ ३ १ २ ३क २र ३ १ २र ३ १ २
येभिर्नृम्णा च देव्या च पुनत आदिद्राजानं मनना अगृभ्णत ३ १७(चे)

इति पञ्चमः खण्डः ५

३ २ ३ २ ३क २र ३ २ऽ २ ३ १ २र ३ १ २
१४२६ अभि वायुं वीत्यर्षा गृणानो३ऽभि मित्रावरुणा पूयमानः
३ १ २र ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
अभी नरं धीजवनँ रथेष्ठामभीन्द्रं वृषणं वज्रबाहुम् १

३ १ २र ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
१४२७ अभि वस्त्रा सुवसनान्यर्षाभि धेनूः सुदुघाः पूयमानः

३ २ ३ १ २र ३ १२ ३ १ २३ १ २
अभि चन्द्रा भर्तवे नो हिरण्याभ्यश्वान्रथिनो देव सोम २

३ १ २ ३ १ २र ३ २उ ३ १ २ ३ १ २
१४२८ अभी नो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा पूयमानः
३ २उ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ १ २
अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः ३ १८(ख)

१ २र ३ १ २ ३ १ २
१४२९ यज्ञायथा अपूर्व्य मघवन्वृत्रहत्याय
१ २ ३ १ २ ३ १ २ ३ १ २र
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् १

१ २ ३ १ २ ३ २ ३ २ ३ १ २र
१४३० तत्ते यज्ञो अजायत तदर्क उत हस्कृतिः
१ २र ३ १ २ ३ २ ३२उ ३ १ २
तद्विश्वमभिभूरसि यज्जातं यच्च जन्त्वम् २

३ १ २ ३ १ २र ३ १ २र ३ २
१४३१ आमासु पक्वमैरय आ सूर्यँ रोहयो दिवि
३ १ २र ३ २ ३ २ ३ १ २ ३ २
घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ३ १९(पे)

१ २र ३ २ ३ १ २ ३ १ २र
१४३२ मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
वृषा ते वृष्ण इन्दुर्वाजी सहस्रसातमः १

१ २ ३२उ ३ २ ३ १२
१४३३ आ नस्ते गन्तु मत्सरो वृषा मदो वरेण्यः
३ १ २ ३ १ २ ३ १ २र
सहावाँ इन्द्र सानसिः पृतनाषाडमर्त्यः २

२उ ३ १ २ ३ २ ३ १ २ ३ १ २
१४३४ त्वँ हि शूरः सनिता चोदयो मनुषो रथम्
३ २ ३ १ २ ३२उ ३ २ ३ २ ३ १ २
सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा ३ २०(बि)

इति षष्ठः खण्डः ६

इति षष्ठप्रपाठके द्वितीयोऽर्धः ६-२

इति द्वादशोऽध्यायः समाप्तः १२

अथ त्रयोदशोऽध्यायः

अथ षष्ठप्रपाठके तृतीयोऽर्धः

(१-२०) १ कविर्भार्गवः २, ९, १६ भरद्वाजो बार्हस्पत्यः ३ असितः काश्यपो देवलो वा ४ सुकक्षः आंगिरसः ५ विभ्राट्सौर्यः ६, ८ वसिष्ठो मैत्रावरुणिः १०-१७ भार्गवः प्रागाथः १०, १७ विश्वामित्रो गाथिनः ११ मेधातिथिः काण्वः १२ शतं वैखानसाः १३ यजत आत्रेयः १४ मधुच्छन्दा वैश्वामित्रः १५ उशना काव्यः १८ हर्यतः प्रागाथः १९ बृहद्दिव आथर्वणः २० गृत्समदः शौनकः ॥ १, ३, १५ पवमानः सोमः २, ४, ६, ७, १४, १९, २० इन्द्रः ८ सरस्वान् ९ सरस्वती १० सविता ११ ब्रह्मणस्पतिः १२ अग्निः पवमानः १३ मित्रावरुणौ १६-१८ अग्निः १८ हवींषि वा ५ सूर्यः ॥ १, ३-४, ८-१४, १६ (२-३) १८ गायत्री २ (१-३) अनुष्टुप् २ (४) बृहती ६, ७ प्रगाथः १६ (१) वर्धमाना १९ त्रिष्टुप् २० (१) अष्टिः २० (२-३) अतिशक्वरी ५ जगती

१ २ ३ २उ ३ २ ३ २ ३ १ २र
१४३५ पवस्व वृष्टिमा सु नोऽपामूर्मिं दिवस्परि
३ १ २ ३ १ २र
अयक्ष्मा बृहतीरिषः १

१ २ ३ १२ ३ २ ३ १ २ ३ २ २र
१४३६ तया पवस्व धारया यया गाव इहागमन्
१ २ ३ १ २ ३ २
जन्यास उप नो गृहम् २

३ १ २ ३ १२ ३ १ २ ३ १ २
१४३७ घृतं पवस्व धारया यज्ञेषु देववीतमः
३ १ २ ३ १ २र
अस्मभ्यं वृष्टिमा पव ३

१ २ ३ २ ३कऽ १ २ ३ १ २ ३ १२
१४३८ स न ऊर्जे व्य३व्ययं पवित्रं धाव धारया
३ १ २ ३ २ ३ १ २
देवासः शृणवन्हि कम् ४

१ २ ३१ २ ३ १ २
१४३९ पवमानो असिष्यदद्रक्षाँस्यपजङ्घनत्
३ २ ३ २ ३ १ २
प्रत्नवद्रोचयन्नुचः ५ १(ची)

१ २ ३ १ २ ३ १ २ ३ १ २
१४४० प्रत्यस्मै पिपीषते विश्वानि विदुषे भर
३ २ ३ २ ३ १ २ ३ १ २
अरङ्गमाय जग्मयेऽपश्चादध्वने नरः १

१ २ ३ १ २ ३ १ २ ३ १ २
१४४१ एमेनं प्रत्येतन सोमेभिः सोमपातमम्
१ २ ३ २ ३ १ २ ३ २ ३ १ २
अमत्रेभिर्ऋजीषिणमिन्द्रँ सुतेभिरिन्दुभिः २

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
१४४२ यदी सुतेभिरिन्दुभिः सोमेभिः प्रतिभूषथ
२ ३ १ २ ३ १ २ ३२उ ३ १ २र
वेदा विश्वस्य मेधिरो धृषत्तन्तमिदेषते ३

३ १ २ ३ २उ ३ १ २ ३ १ २ ३ २
१४४३ अस्माअस्मा इदन्धसोऽध्वर्यो प्र भरा सुतम्
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
कुवित्समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्वरत् ४ २(ठ)

इति प्रथमः खण्डः १

३ २ ३ १ २र ३ १ २ ३ १ २
१४४४ बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे
१ २ ३ १ २
सोमाय गाथमर्चत १

१ २ ३१ २ ३१ २र
१४४५ हस्तच्युतेभिरद्रिभिः सुतँ सोमं पुनीतन
२ ३ १ २ ३ १ २
मधावा धावता मधु २

२ ३ १ २र ३ २ ३ १ २
१४४६ नमसेदुप सीदत दध्नेदभि श्रीणीतन
२ ३ १ २
इन्दुमिन्द्रे दधातन ३

३ १ २र ३ १ २ ३ १ २र
१४४७ अमित्रहा विचर्षणिः पवस्व सोम शं गवे
३ १ २ ३ २
देवेभ्यो अनुकामकृत् ४

१ २ ३ १ २ ३ १ २ ३ १ २
१४४८ इन्द्राय सोम पातवे मदाय परि षिच्यसे
३ १ २र ३ १ २
मनश्चिन्मनसस्पतिः ५

१ २ ३ १ २ ३ १ २
१४४९ पवमान सुवीर्यँ रयिँ सोम रिरीहि णः
२ ३ १ २ ३ २
इन्दविन्द्रेण नो युजा ६ ३(यू)

२र ३ २ ३ १ २ ३ १ २र
१४५० उद्धेदभि श्रुतामघं वृषभं नर्यापसम्
१ २
अस्तारमेषि सूर्य १

२ ३ १ २ ३ १ २र ३ १ २ ३क २र
१४५१ नव यो नवतिं पुरो बिभेद बाह्वोजसा
१ २ ३ १ २
अहिं च वृत्रहावधीत् २

२ ३ १ २ ३ १ २र ३ २ ३ १ २
१४५२ स न इन्द्रः शिवः सखाश्वावद्गोमद्यवमत्
३ १ २
उरुधारेव दोहते ३ ४(ती)

इति द्वितीयः खण्डः २

३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
१४५३ विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम्
१ २ ३ १ २ ३१ २ ३ १ २ ३ १ २ ३ १ २र
वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा वि राजति १

३ २ ३ १ २र ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
१४५४ विभ्राड् बृहत्सुभृतं वाजसातमं धर्मं दिवो धरुणे सत्यमर्पितम्
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा २

३२उ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
१४५५ इदँ श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत्
३ २ ३ २उ ३ १ २ ३ २ ३१ २ ३ २३ २ ३ १ २
विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ३ ५(जि)

१ ३ १ २ ३ १ २ ३ २ ३२ ३ १ २
१४५६ इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा
१ २ ३ १ २ ३ १ २ ३ १ ३र
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि १

२ ३ १ २ ३ १ २ ३ २ऽ १ २ ३ १ २
१४५७ मा नो अज्ञाता वृजना दुराध्यो३ माशिवासोऽव क्रमुः
१ २ ३ २ ३ २३ १ २ ३ १ २
त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसि २ ६(ल)

३ २ ३ २ ३ २ ३ १ २ ३१ २
१४५८ अद्याद्या श्वःश्व इन्द्र त्रास्व परे च नः
१ २ ३१ २ ३ २ ३ २ ३ १ २
विश्वा च नो जरितॄन्त्सत्पते अहा दिवा नक्तं च रक्षिषः १

३ १ २र ३ १ २ ३ १ २ ३ १ २ ३क २र ३ २
१४५९ प्रभङ्गी शूरो मघवा तुवीमघः सम्मिश्लो वीर्याय कम्
३ १ २ ३ १ २र ३ १ २र ३ १ २
उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः २ ७(वी)

इति तृतीयः खण्डः ३

३ २ ३ १ २ ३ १ २ ३ १ २
१४६० जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः
१ २
सरस्वन्तँहवामहे १ ८(रौ)

३ १ २ ३ २ ३ १ २ ३१ २ ३ १ २
१४६१ उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा
१ २ ३ १ २
सरस्वती स्तोम्या भूत १ ९(हौ)

१ २ ३ १ २र ३ १ २ ३ १ २
१४६२ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि
२ ३ १ २ ३ १ २
धियो यो नः प्रचोदयात् १

१४६३ सोमानां स्वरणं कृणुहि ब्रह्मणस्पते
कक्षीवन्तँ य औशिजः २

१४६४ अग्न आयूँषि पवसे आ सुवोर्जं इषं च नः
आरे बाधस्व दुच्छुनाम् ३ १०(य)

१४६५ ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य
महि वा क्षत्रं देवेषु १

१४६६ ऋतमृतेन सपन्तेषिरं दक्षमाशाते
अद्रुहा देवौ वर्धेते २

१४६७ वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः
बृहन्तं गर्तमाशाते ३ ११(पा)

१४६८ युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः
रोचन्ते रोचना दिवि १

१४६९ युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे
शोणा धृष्णू नृवाहसा २

१४७० केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे
समुषद्भिरजायथाः ३ १२(य)

इति चतुर्थः खण्डः ४

३ १ २र ३ १ २ ३ १ २ ३ १ २
१४७१ अयꣳसोम इन्द्र तुभ्यꣳसुन्वे तुभ्यं पवते त्वमस्य पाहि
२ ३ १ २ ३ १ २र ३२उ ३ १ २ ३ १ २ ३ १ २
त्वꣳह यं चकृषे त्वं ववृष इन्दुं मदाय युज्याय सोमम् १

२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
१४७२ स ईꣳ रथो न भुरिषाडयोजि महः पुरूणि सातये वसूनि
२ ३ १ २ ३क २र ३ १ २ ३ १ २ ३ १ २
आदीं विश्वा नहुष्याणि जाता स्वर्षाता वन ऊर्ध्वा नवन्त २

३ २उ ३ १ २र ३ १ २ ३ २उ ३ २
१४७३ शुष्मी शर्धो न मारुतं पवस्वानभिशस्ता दिव्या यथा विट्
२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २उ ३ २
आपो न मक्षू सुमतिर्भवा नः सहस्राप्साः पृतनाषाण्न यज्ञः ३ १३(घी)

१ २ ३ २ ३ २ ३ १ ३ ३ २
१४७४ त्वमग्ने यज्ञानाꣳहोता विश्वेषाꣳहितः
३ २ ३ १ २ ३ १ २
देवेभिर्मानुषे जने १

१ २ ३ १ २ ३२ ३ १ २ ३ २
१४७५ स नो मन्द्राभिरध्वरे जिह्वाभिर्यजा महः
२ ३ १ २ ३ १ २
आ देवान्वक्षि यक्षि च २

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१४७६ वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा
१ २ ३ १ २
अग्ने यज्ञेषु सुक्रतो ३ १४(हौ)

१ २ ३ १ २र ३१ २ ३ १ २
१४७७ होता देवो अमर्त्यः पुरस्तादेति मायया
३ १ २ ३ १ २
विदथानि प्रचोदयन् १

३ १ २र ३२ ३ १ २
१४७८ वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते
१ २ ३ २ ३ १ २
विप्रो यज्ञस्य साधनः २

३ १ २ ३ १२ ३ २ ३ २ ३ १ २
१४७९ धिया चक्रे वरेण्यो भूतानां गर्भमा दधे

१ २ ३ २३ १ २
दक्षस्य पितरं तना ३ १५(रा)

इति पञ्चमः खराडः ५

२ ३१ २ ३ २३ १२ ३ १ २
१४८० आ सुते सिञ्चत श्रियँरोदस्योरभिश्रियम्
३ १ २ ३ २
रसा दधीत वृषभम् १

१ २ ३ २ ३ २ऽ २ ३ २ ३ २ ३१ २
१४८१ ते जानत स्वमोक्यं३ सं वत्सासो न मातृभिः
३ १ २ ३ १ २
मिथो नसन्त जामिभिः २

२३ १ २३ १ २ ३२ ३१२ ३ २
१४८२ उप स्रक्वेषु बप्सतः कृरावते धरुणं दिवि
१ २ ३ २उ ३क २र
इन्द्रे अग्ना नमः स्वः ३ १६(च)

१ २र १ २ ३ २३ १ २ ३ २ ३ २ ३१२
१४८३ तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः
३ १ २ ३ १ २र ३ २३२३ २उ ३ २३ १ २
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः १

३ १ २र ३ १ २ ३ १२ ३ १२ ३१ २
१४८४ वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति
१ २ ३२३ २ ३ १ २ ३ १२ ३ १२
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु २

२उ ३ १ २ ३ २ ३ २उ ३२उ ३ १ २
१४८५ त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः
३ १ २र ३ १ २ ३ २ ३२उ ३ १ २ ३ १ २
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः

३ १७(णी)

१ २ ३ १ २र ३ २ ३ १ २र ३ १ २ ३१
१४८६ त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सोममपिबद्विष्णुना सुतं
२ ३ २
यथावशम्
१ २ ३ २ ३ २३ १२ ३ २३१ २र ३ २ ३ २ ३ १ २र
स ईं ममाद महि कर्म कर्तवे महामुरुँ सैनँ सश्चद्देवो देवँ सत्य इन्दुः

३ १ २र
सत्यमिन्द्रम् १

३ २ ३ १ २र ३ १ २र ३ २ ३ २ ३क२र ३ २उ ३
१४८७ साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैः सासहिर्मृधो
१ २
विचर्षणिः ।
२ ३ १ २ ३२उ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २र
दाता राध स्तुवते काम्यं वसु प्रचेतन सैनँ सश्चद्देवो देवँ सत्य इन्दुः
३ १ २र
सत्यमिन्द्रम् २

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ २ ३ १
१४८८ अध त्विषीमाँ अभ्योजसा कृविं युधाभवदा रोदसी आपृणदस्य मज्मना प्र
२
वावृधे ।
१ २ ३ २ ३ २३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २र
अधत्तान्यं जठरे प्रेमरिच्यत प्र चेतय सैनँ सश्चद्देवो देवँसत्य इन्दुः
३ १ २र
सत्यमिन्द्रम् ३ १८(थि)

इति षष्ठः खण्डः ६

इति षष्ठप्रपाठके तृतीयोऽर्धः षष्ठः प्रपाठकश्च समाप्तः ६

इति त्रयोदशोऽध्यायः

## अथ चतुर्दशोऽध्यायः

### अथ सप्तमप्रपाठके प्रथमोऽर्धः ७-१

(१-१६) १, ९ प्रियमेध आङ्गिरसः २ नृमेध-पुरुमेधावाङ्गिरसौ ३, ७ त्र्यरुणस्त्रैवृष्णः त्रसदस्युः पौरुकुत्सः ४ शुनःशेप आजीगर्तिः ५ वत्सः काण्वः ६ अग्निस्तापसः ८ विश्वमना वैयश्वः १० वसिष्ठो मैत्रावरुणिः ११ सौभरिः काण्वः १२ शतं वैखानसः १३ वसूयव आत्रेयः १४ गोतमो राहूगणः १५ केतुराग्नेयः १६ विरूप आङ्गिरसः ॥ १-२, ५, ८-९ इन्द्रः ३, ७ पवमानः सोमः ४, १०-११, १३-१६ अग्निः ६ विश्वे देवाः १२ अग्निः पवमानः ॥ १, ४-५, १२-१६ गायत्री २, १० प्रगाथः ३, ७ ऊर्ध्वा बृहती ६ अनुष्टुप् ८-९ उष्णिक् ११ बृहती ॥

३ १ २र ३१ २ ३ १ २ ३ २
१४८९ अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे

३ २   ३ २ ३ १ २
सूनुँ सत्यस्य सत्पतिम् १

१ २र   ३१ २ ३१ २ ३ १ २
१४९० आ हरयः ससृज्रिरेऽरुषीरधि बर्हिषि
२ ३ २ ३१ २
यत्राभि संनवामहे २

१ २३ १२ ३ १२ ३२ ३ २३ १२
१४९१ इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु
१ २ ३२ ३२
यत्सीमुपह्वरे विदत् ३ १(हा)

२ ३ १ २३ २ ३ १ २ ३१ २
१४९२ आ नो विश्वासु हव्यमिन्द्रँ समत्सु भूषत
२३ १ २ ३ १२ ३ १ २
उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋचीषम १

२ ३ १ २३ १ २र ३ १ २ ३ १ २ ३ २
१४९३ त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत्
३ २ ३ १ २र ३२ ३ १२ ३२
तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः २ २(या)

३२ ३१२ ३ २उ ३क २र ३ २ ३ २ ३ १ २र
१४९४ प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यं महो गाहाद्दिव आ निरधुक्षत
१ २३ १ २र ३ १२
इन्द्रमभि जायमानँ समस्वरन् १

२ ३ २ ३ १ २ ३ १ २ ३१ २ ३ २ ३क २र
१४९५ आदीं के चित्पश्यमानास आप्यं वसुरुचो दिव्या अभ्यनूषत
३ १ २र ३ १ २
दिवो न वारँ सविता व्यूर्णुते २

२३ २ ३१ २ ३ १२ ३ २ ३ २ ३ १२ ३ २ ३ १ २
१४९६ अध यदिमे पवमान रोदसी इमा च विश्वा भुवनाभि मज्मना
३२उ ३ १ २३ १ २र
यूथे न निष्ठा वृषभो वि राजसि ३ ३(खू)

३ २ ३ २उ ३ १ २ ३ १ २३१ २र
१४९७ इममू षु त्वमस्माकँ सनिं गायत्रं नव्याँसम्
१२ ३२३ १ २
अग्ने देवेषु प्र वोचः १

३ १ २ ३ १ २ ३ १ २ ३ २
१४९८ विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ
३ २ ३ १ २
सद्यो दाशुषे क्षरसि २

१ २ ३ १ २र ३ १ २
१४९९ आ नो भज परमेष्वा वाजेषु मध्यमेषु
२ ३ २ ३ १ २
शिक्षा वस्वो अन्तमस्य ३ ४(टा)

३२उ ३ १ २र ३ २ ३ १ २ ३ १ २
१५०० अहमिद्धि पितुष्परि मेधामृतस्य जग्रह
३ १ २र
अहꣳसूर्य इवाजनि १

३ २ ३ २ ३ १ २ ३ १ २ ३ २
१५०१ अहं प्रत्नेन जन्मना गिरः शुम्भामि कण्ववत्
२उ ३ २ ३ २ ३ २
येनेन्द्रः शुष्ममिद्दधे २

१ २र ३ १ २ ३ १ २र ३ १ २ ३ २
१५०२ ये त्वामिन्द्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः
१ २र ३ १ २
ममेद्वर्धस्व सुष्टुतः ३ ५(थु)

इति प्रथमः खण्डः १

२ ३ १ २ ३ २ ३ २ ३ १ २
१५०३ अग्ने विश्वेभिरग्निभिर्जोषि ब्रह्म सहस्कृत
१ २ ३ २उ ३ २ ३ १ २ ३ १२
ये देवत्रा य आयुषु तेभिर्नो महया गिरः १

१ २र ३ १ २३ १ २र ३ १ २
१५०४ प्र स विश्वेभिरग्निभिरग्निः स यस्य वाजिनः
१ २ ३ २ ३ २उ ३ २उ ३ १ २
तनये तोके अस्मदा सम्यङ्वाजैः परीवृतः २

१ २ ३ २ ३ १ २ ३ १ २
१५०५ त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय
१ २ ३ १ २ ३ १ २र
त्वं नो देवतातये रायो दानाय चोदय ३ ६(डि)

१ २ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
१५०६ त्वे सोम प्रथमा वृक्तबर्हिषो महे वाजाय श्रवसे धियं दधुः
१ २र ३क २र
स त्वं नो वीर वीर्याय चोदय १

३क २र ३ १ २र ३ २ ३ २ ३ १ २र ३ २ ३ १ २
१५०७ अभ्यभि हि श्रवसा ततर्दिथोत्सं न कं चिज्जनपानमक्षितम्
१ २ ३ १ २र ३ १ २
शर्याभिर्न भरमाणो गभस्त्योः २

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
१५०८ अजीजनो अमृत मर्त्याय अमृतस्य धर्मन्नमृतस्य चारुणः
१ २ ३ २ ३ २ ३ १ २
सदासरो वाजमच्छा सनिष्यदत् ३ ७(ले)

२ ३ १ २ ३ १ २ ३ १ २र
१५०९ एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु
१ २र ३ २
प्र राधाँसि चोदयते महित्वना १

२ ३ १ २ ३ २ ३ १ २ ३ १ २
१५१० उपो हरीणां पतिं राधः पृञ्चन्तमब्रवम्
३ १ २ ३ २ ३ १ २
नूनँ श्रुधि स्तुवतो अश्व्यस्य २

२ ३क ५ २ ३ २ ३ २ ३ २ ३१ २३ २
१५११ न ह्यँ३ग पुरा च न जज्ञे वीरतरस्त्वत्
१ २ ३ २उ ३ २ ३ १ २
न की राया नैवथा न भन्दना ३ ८(चा)

३ २ ३ १ २ ३ १ २र
१५१२ नदं व ओदतीनां नदं योयुवतीनाम्
१ २ ३ १ २ ३ १ २
पतिं वो अघ्न्यानां धेनूनामिषुध्यसि १ ९(व)

इति द्वितीयः खण्डः २

३ १ २ ३ २ ३ १ २ ३ १ २
१५१३ देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम्
१ २ ३ २ ३ १ २ ३ १ २र ३ १ २
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते १

१ २र ३२ ३ १ २ ३ १ २ ३ १ २
१५१४ तँहोतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २र ३ १ २
दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषे २ १०(लि)

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २
१५१५ अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः
२ ३ २ ३१ १र ३ १ २ ३ १ २ ३ १२
उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः १

२ ३ १ २ ३ १ २ ३ १ २ ३ २
१५१६ यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृण्वतः
३ २ ३ १ २ ३ २ ३ २ ३ १ २
सहस्रसां मेधसाताविव त्मनाग्निं धीभिर्नमस्यत २

१ २र ३ २
१५१७ प्र दैवोदासो अग्निर्देव इन्द्रो न मज्मना

अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि ३ ११(हा)

२ ३ १ २ ३
१५१८ अग्न आयूँषि पवस आसुवोर्जमिषं च नः

आरे बाधस्व दुच्छुनाम् १

३ २उ ३ १ २ ३ १ २
१५१९ अग्निर्ऋषिः पवमानः पाञ्चजन्यः २ः
१ २ ३ २
तमीमहे महागयम् १५१९

२ ३ १ २ ३ १ २ ३ १ २र ३ १ २
१५२० अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम्
१ २ ३ २उ ३ १ २
दधद्रयिं मयि पोषम् ३ १२(फ)

१ २ ३ १ २ ३ १ २ ३ १ २
१५२१ अग्ने पावक रोचिषा मन्द्रया देव जिह्वया
२ ३ १ २ ३ १ २
आ देवान्वक्षि यक्षि च १

१ २ ३ १२ ३१ २
१५२२ तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम्
३ २उ ३ १ २
देवाँ आ वीतये वह २

३ १ २ ३ २ ३ १ २
१५२३ वीतिहोत्रं त्वा कवे द्युमन्तँ समिधीमहि
१ २ ३ १ २ ३२
अग्ने बृहन्तमध्वरे ३ १३(टौ)

इति तृतीयः खण्डः ३

१ २ ३ १ २ ३२ ३ १ २
१५२४ अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि
१ २ ३१ २
विश्वासु धीषु वन्द्य १

१ २ ३ १ २ ३ २३ १२
१५२५ आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम्
१ २ ३ २ ३१२
विश्वासु पृत्सु दुष्टरम् २

१ २ ३१ २ ३ २ ३ १ २
१५२६ आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम्
३ १ २ ३ १ २
मार्डीकं धेहि जीवसे ३ १४(वौ)

३ १ २ ३ २३ १ २ ३ १ २ ३ १ २
१५२७ अग्निँ हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु
१२ ३ १२
तेन जेष्म धनंधनम् १

२ ३ २ ३ १ २ ३ १२ ३ २ ३ २
१५२८ यया गा आकरामहै सेनयाग्ने तवोत्या
१ २ ३ १ २
तां नो हिन्व मघत्तये २

१ २ ३२ ३ १ २ ३१ २र ३ १ २
१५२९ आग्ने स्थूरँ रयिं भर पृथुं गोमन्तमश्विनम्
३ २उ ३१ २ ३ २
अङ्धि खं वर्तया पविम् ३

२ ३ १ २ ३ २३ १ २र ३ २
१५३० अग्ने नक्षत्रमजरमा सूर्यँ रोहयो दिवि
२ ३ २ ३ १ २
दधज्ज्योतिर्जनेभ्यः ४

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
१५३१ अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत्
१ २ ३२उ ३ १ २
बोधा स्तोत्रे वयो दधत् ५ १५(था)

३ २ ३ २ ३ २ ३ १ २र ३ २ ३ २
१५३२ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्
३ १ २र
अपाँ रेताँसि जिन्वति १

१ २ ३ १ २ ३ २ ३ १ २३क २र
१५३३ ईशिषे वार्यस्य हि दात्रस्याग्ने स्वःपतिः
३ २ ३ २ ३ १ २
स्तोता स्यां तव शर्मणि २

१ २ ३ १ २ ३ १ २ ३ १ २र
१५३४ उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते
२ ३ १ २ ३ १ २
तव ज्योतीँष्यर्चयः ३ १६(ली)

इति चतुर्थः खण्डः ४

इति सप्तमप्रपाठके प्रथमोऽर्धः ७-१

इति चतुर्दशोऽध्यायः १४

अथ पञ्चदशोऽध्यायः

अथ सप्तमप्रपाठके द्वितीयोऽर्धः ७-२

(१-१४) १, ११ गोतमो राहूगणः २, ९ विश्वामित्रो गाथिनः ३ विरूप आङ्गिरसः ४, ७ भर्गः प्रागाथः ५ त्रित आप्त्यः १० सोभरिः काण्वः १२ गोपवन आत्रेयः १३ भरद्वाजो बार्हस्पत्यो वीतहव्य आङ्गिरसो वा १३ प्रयोगो भार्गवः पावकोऽग्निर्बार्हस्पत्यो वा गृहपति-यविष्ठौ सहसः पुत्रवान्यतरो वा ॥ अग्निः ॥ १-३, ६, ९, १४ गायत्री ४, ७, ८ प्रगाथः ५ त्रिष्टुप् १० काकुभः प्रगाथः ११ उष्णिक् १२ अनुष्टुम्मुखः

प्रगाथः १३ जगती ॥

१ २ ३ १ २र ३ २ ३ २ ३क२र
१५३५ कस्ते जामिर्जनानामग्ने को दाश्वध्वरः
२ ३ १ २ ३ २
को ह कस्मिन्नसि श्रितः १

२ ३ १ २र ३ १ २ ३ १ २ ३ २
१५३६ त्वं जामिर्जनानामग्ने मित्रो असि प्रियः
२ ३ १ २ ३ १ २
सखा सखिभ्य ईड्यः २

१ २ ३ १ २र ३ १ २ ३ २ ३ २ ३ २
१५३७ यजा नो मित्रावरुणा यजा देवाँ ऋतं बृहत्
२ ३ २ ३ १ २र
अग्ने यक्षि स्वं दमम् ३ १(रु)

३ १ २ ३क २र ३१ २र ३ २
१५३८ ईडेन्यो नमस्यस्तिरस्तमाँसि दर्शतः
२ ३ १ २ ३ १ २
समग्निरिध्यते वृषा १

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
१५३९ वृषो अग्निः समिध्यतेऽश्वो न देववाहनः
२ ३ १ २
तँ हविष्मन्त ईडते २

१ २ ३ १ २ ३ १ २ ३ १ २
१५४० वृषणं त्वा वयं वृषन्वृषणः समिधीमहि
२ ३ १ २ ३ २
अग्ने दीद्यतं बृहत् ३ २(लि)

१ २ ३१ २ ३ १ २ ३१ २
१५४१ उत्ते बृहन्तो अर्चयः समिधानस्य दीदिवः
१ २ ३ १ २
अग्ने शुक्रास ईरते १

१ २ ३ २ऽ १ २ ३ १ २
१५४२ उप त्वा जुह्वो३ मम घृताचीर्यन्तु हर्यत
१ २ ३ १ २
अग्ने हव्या जुषस्व नः २

३ १ २र ३ १ २ ३१ २ ३ १ २
१५४३ मन्द्रँ होतारमृत्विजं चित्रभानुं विभावसुम्
३ १ २३ १ २
अग्निमीडे स उ श्रवत् ३ ३(ह)

३ १ २ ३ १ २ ३ २ऽ२ ३ १ २
१५४४ पाहि नो अग्न एकया पाह्यू३त द्वितीयया
३ २ ३ २ ३ १ २ ३ १ २३ १ २
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो १

३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
१५४५ पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नोऽव
१ २र ३ १ २ ३ १ २र ३ २
त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे वृधे २ ४(यि)

इति प्रथमः खण्डः १

३ १ २ ३ १ २र ३ २ ३ १ २ ३ १ २
१५४६ इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाँ अदर्शि
३ १ २र ३ १ २३ १ २ ३ १ २ ३ १ २
चिकिद्वि भाति भासा बृहतासिक्नीमेति रुशतीमपाजन् १

३ १ २र ३ १ २र ३ २ ३ २ ३ १ २ ३ २ ३ २
१५४७ कृष्णां यदेनीमभि वर्पसाभूज्जनयन्योषां बृहतः पितुर्जाम्
३ २ ३ १ २र ३ २ ३ १ २र ३ १ २र
ऊर्ध्वं भानुँ सूर्यस्य स्तभायन्दिवो वसुभिररतिर्वि भाति २

३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३क २र ३ २
१५४८ भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात्
३ १ २र३ २ ३ २३ १ २ ३ १ २३ २ ३ १ २
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्थात् ३ ५(यो)

१ २ ३ १ २ ३ १ २
१५४९ कया ते अग्ने अङ्गिर ऊर्जो नपादुपस्तुतिम्
१ २ ३ १ २
वराय देव मन्यवे १

१ २ ३ २ ३ १ २ ३ १ २
१५५० दाशेम कस्य मनसा यज्ञस्य सहसो यहो
१ २ ३ १ २र
कदु वोच इदं नमः २

१ ३ २उ ३ २ ३ १ २ ३ १ २ ३ २
१५५१ अधा त्वँ हि नस्करो विश्वा अस्मभ्यँ सुक्षितीः

१ २ ३ १२
वाजद्रविणसो गिरः ३ ६(ट)

२ ३ १ २ ३ २ ३ १ २
१५५२ अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे
१ २र ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे १

२ ३ १ २ ३ २ ३ १ २ ३ २
१५५३ अच्छा हि त्वा सहसः सूनो अङ्गिरः स्रुचश्चरन्त्यध्वरे
३ १ २र ३ १ २ ३ २ ३ १ २ ३ २
ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् २ ७(या)

१ २ ३१ २ ३ १ २ ३ २
१५५४ अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम्
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
अच्छा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये १

३ २ ३ १ २र ३ १ २ ३ २ ३ १ २
१५५५ अग्निँ सूनुँ सहसो जातवेदसं दानाय वार्याणाम्
३ २उ ३ २ ३ २ ३ १ २र ३ १ २ ३ २
द्विता यो भूदमृतो मर्त्येष्वा होता मन्द्रतमो विशि २ ८(टा)

इति द्वितीयः खण्डः २

१ २ ३ २ ३ २ ३ १ २र
१५५६ अदाभ्यः पुरएता विशामग्निर्मानुषीणाम्
२ ३ २ ३ २ ३ १ २
तूर्णी रथः सदा नवः १

३ १ २र ३ १ २ ३ १ २ ३ १ २
१५५७ अभि प्रयाँसि वाहसा दाश्वाँ अश्नोति मर्त्यः
१ २ ३ १ २
क्षयं पावकशोचिषः २

३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
१५५८ साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः
३ २ ३ १ २
अग्निस्तुविश्रवस्तमः ३ ९(वि)

३ १ २ ३ १ २र ३ २ ३ १ २ ३ १ २ ३२
१५५९ भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः

३ २ ३ १ २र
भद्रा उत प्रशस्तयः १

३ १ २र ३ २ ३ १ २ ३ १ २ ३ २
१५६० भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहिः
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टये २ १०(लि)

२ ३ १ २ ३ १ २ ३ १ २
१५६१ अग्ने वाजस्य गोमत ईशानः सहसो यहो
३ १ २ ३ २ ३ १ २
अस्मे देहि जातवेदो महि श्रवः १

१ २ ३ १ २र ३ २३ २ ३ १ २ ३ २
१५६२ स इधानो वसुष्कविरग्निरीडेन्यो गिरा
३ २ ३ १ २
रेवदस्मभ्यं पुर्वणीक दीदिहि २

३ १ २ ३२उ ३ १ २ ३ १ २र
१५६३ क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः
१ २ ३ १ २ ३ १ २
स तिग्मजम्भ रक्षसो दह प्रति ३ ११(टा)

इति तृतीयः खण्डः ३

३ १ २ ३ १ २ ३ १ २ ३ २
१५६४ विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम्
३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
अग्निं वो दुर्यं वच स्तुषे शूषस्य मन्मभिः १

१ २र ३ १ २ ३२उ ३ १ २
१५६५ यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम्
३ १ २ ३ १ २
प्रशँसन्ति प्रशस्तिभिः २

१ २ ३ १ २ ३ २ ३ २ ३ १ २
१५६६ पन्याँसं जातवेदसं यो देवतात्युद्यता
३ १ २र ३ २
हव्यान्यैरयद्दिवि ३ १२(टा)

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३२ ३ २
१५६७ समिद्धमग्निं समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवम्

विप्रँ होतारं पुरुवारमद्रुहं कविँ सुम्नैरीमहे जातवेदसम् १

१५६८ त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं दधिरे पायुमीड्यम्
देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा नि षेदिरे २

१५६९ विभूषन्नग्न उभयाँ अनु व्रता दूतो देवानाँ रजसी समीयसे
यत्ते धीतिँ सुमतिमावृणीमहेऽध स्म नस्त्रिवरूथः शिवो भव ३ १३(या)

१५७० उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः
वायोरनीके अस्थिरन् १

१५७१ यस्य त्रिधात्ववृतं बर्हिस्तस्थावसन्दिनम्
आपश्चिन्नि दधा पदम् २

१५७२ पदं देवस्य मीढुषोऽनाधृष्टाभिरूतिभिः
भद्रा सूर्य इवोपदृक् ३ १४(हु)

इति चतुर्थः खण्डः ४

इति सप्तमप्रपाठके द्वितीयोऽर्धः ७-२

इति पञ्चदशोऽध्यायः समाप्तः १५

अथ षोडशोऽध्यायः

अथ सप्तमप्रपाठके तृतीयोऽर्धः ७-३

(१-२१) १, ८, १८ मेध्यातिथिः काण्वः २ विश्वामित्रो गाथिनः ३-४ भर्गः प्रागाथः ५ सोभरिः काण्वः ६, १५ शुनःशेप आजीगर्तिः ७ सुकक्ष आङ्गिरसः ९ विश्वकर्मा भौवनः १० अनानतः पारुच्छेपिः ११ भरद्वाजो बार्हस्पत्यः १२ गोतमो राहूगणः १३

ऋजिश्वा भारद्वाजः १४ वामदेवो गौतमः १७ देवातिथिः कारावः १६ वालखिल्यः २० पर्वतनारदौ २१ अत्रिर्भौमः ॥ १, ३-४, ७-८, १५, १७-१६ इन्द्रः २ इन्द्राग्नी ६ वरुणः ६ विश्वकर्मा १०, २०, २१ पवमानः सोमः ११ पूषा १२ मरुतः १३ विश्वे देवाः १४ द्यावा पृथिवी १६ अग्निः हर्वीषि वा ॥ १, ३-५, ८, १७-१६ प्रगाथः २, ६-७, ११-१६ गायत्री ६ त्रिष्टुप् १० अत्यष्टिः २० उष्णिक् २१ जगती ॥

१५७३ अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः
समीचीनास ऋभवः समस्वरन्नुद्रा गृणन्त पूर्व्यम् १

१५७४ अस्येदिन्द्रो वावृधे वृष्ण्यँशवो मदे सुतस्य विष्णवि
अद्या तमस्य महिमानमायवोऽनु ष्टुवन्ति पूर्वथा २ १(रि)

१५७५ प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः
इन्द्राग्नी इष आ वृणे १

१५७६ इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम्
साकमेकेन कर्मणा २

१५७७ इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः
ऋतस्य पथ्या३ अनु ३

१५७८ इन्द्राग्नी तविषाणि वाँसधस्थानि प्रयाँसि च
युवोरप्तूर्यँहितम् ४ २(टा)

१५७९ शग्ध्यू३ षु शचीपत इन्द्र विश्वाभिरूतिभिः

२ ३ १ २र ३ १ २ ३ २३१२ ३ १ २
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि १

३ १ २र ३ १ २र ३ १ २ ३ १ २
१५८० पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः
२ ३ १ २र ३ १ २३ २उ ३ २ ३ १ २र
न किर्हि दानं परि मर्धिषत्वे यद्यद्यामि तदा भर २ ३(चु)

२उ ३ १२ ३ २उ ३ १ २
१५८१ त्वँ ह्येहि चेरवे विदा भगं वसुत्तये
१ २ ३ १ २ ३ २ ३ १ २
उद्वावृषस्व मघवन्गविष्टय उदिन्द्राश्वमिष्टये १

२ ३ २ ३१ २ ३ १ २ ३ २ ३ १ २
१५८२ त्वं पुरू सहस्राणि शतानि च यूथा दानाय मँहसे
१ २ ३१ २ ३ १२ ३ २ ३ २ ३ १ २
आ पुरन्दरं चकृम विप्रवचस इन्द्रं गायन्तोऽवसे २ ४(फौ)

२उ ३ १ २३ २ ३ १ २ ३ १ २र
१५८३ यो विश्वा दयते वसु होता मन्द्रो जनानाम्
२ ३१ २र ३ १ २ ३ १ २र ३ १ २
मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये १

२ ३ २ ३ २ ३क २र ३ १ २ ३ १ २ ३ १ २
१५८४ अश्वं न गीर्भी रथ्यँ सुदानवो मर्मृज्यन्ते देवयवः
३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनाम् २ ५(पु)

इति प्रथमः खण्डः १

३ १ २ ३ १ २ ३ १ २
१५८५ इमं मे वरुण श्रुधी हवमद्या च मृडय
१ २ ३ १ २र
त्वामवस्युरा चके १ ६(व)

२ ३ १ २ ३ १ २र
१५८६ कया त्वं न ऊत्याभि प्र मन्दसे वृषन्
१ २ ३ २ ३ १ २
कया स्तोतृभ्य आ भर १ ७(य)

२ ३ २३ १ २ ३ १ २ ३क २र ३२
१५८७ इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे

१ २ ३ २ ३ १ २ ३ २ ३ १२ ३१२
इन्द्रँ समीके वनिनो हवामह इन्द्रं धनस्य सातये १

१ २ ३ १ २र ३ २३ २ ३ १ २
१५८८ इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत्
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे स्वानास इन्दवः २ ८(वा)

१ २ ३ १ २ ३ २ ३ १ २ ३ २ १ २र
१५८९ विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व तन्व३ँ स्वा हि ते
१ २ ३ २ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १२
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु १ ९(ला)

३ २ ३ १ २र ३ २उ ३ १ २ ३ १ २ ३ २ ३ २
१५९० अया रुचा हरिराया पुनानो विश्वा द्वेषाँसि तरति सयुग्वभिः सूरो न
३ १ २
सयुग्वभिः ।
१ २ ३ १ २ ३ १ २ ३ १ २र
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः ।
२ ३ २३ १ २ ३ १ २र ३ १ २ ३ १ २
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः १

२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २उ ३ १ २ ३ १
१५९१ प्राचीमनु प्रदिशं याति चेकितत्सँ रश्मिभिर्यतते दर्शतो रथो दैव्यो दर्शतो
२र
रथः ।
१ २ ३ २ ३ २उ ३ १ २
अग्मन्नुक्थानि पौँस्येन्द्रं जैत्राय हर्षयन् ।
१ २ ३ १ २र ३ १ २ ३ १ २र
वज्रश्च यद्भवथो अनपच्युता समत्स्वनपच्युता २

२ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २र ३ १ २
१५९२ त्वँ ह त्यत्पणीनां विदो वसु सं मातृभिर्मर्जयसि स्व आ दम ऋतस्य
३ २ ३ १ २
धीतिभिर्दमे ।
३ २ ३ २उ ३ २उ ३ १ २ ३ १ २
परावतो न साम तद्यत्रा रणन्ति धीतयः ।
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे ३ १०(ङे)

इति द्वितीयः खण्डः २

३१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २
१५९३ उत नो गोषणिं धियमश्वसां वाजसामुत

३ १ २ ३ १ २
नृवत्कृणुह्यूतये १ ११(यौ)

३ १ २ ३ १ २
१५९४ शशमानस्य वा नरः स्वेदस्य सत्यशवसः
३ १ २र ३ १ २
विदा कामस्य वेनतः १ १२(व)

१ २ ३ २ ३ १२ ३ २ ३ १ २ ३ २
१५९५ उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये
३ १ २
सुमृडीका भवन्तु नः १ १३(रौ)

२ ३ २ ३ १ २ ३ १ २
१५९६ प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे
२ ३ २ ३ १ २
शुची उप प्रशस्तये १

३ २ ३क २र ३ २उ ३ १ २
१५९७ पुनाने तन्वा मिथः स्वेन दक्षेण राजथः
३ १ २ ३ २ ३ २
ऊह्याथे सनादृतम् २

३ २ ३ १ २ ३ १२ ३ १ २ ३ २
१५९८ मही मित्रस्य साधथस्तरन्ती पिप्रती ऋृतम्
१ २ ३ १ २र
परि यज्ञं नि षेदथुः ३ १४(का)

३ १ २ ३ १ २ ३ १ २ ३ २
१५९९ अयमु ते समतसि कपोत इव गर्भधिम्
२ ३ १ २
वचस्तच्चिन्न ओहसे १

३ १ २ ३ १ २ ३ १ २
१६०० स्तोत्रँ राधानां पते गिर्वाहो वीर यस्य ते
१ २ ३ १ २
विभूतिरस्तु सूनृता २

३ १ २ ३ २ ३ १ २र
१६०१ ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो
२ ३ १ २
समन्येषु ब्रवावहै ३ १५(ह)

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
१६०२ गाव उप वदावटे मही यज्ञस्य रप्सुदा
३ १ २र ३ १ २
उभा कर्णा हिरण्यया १

३ २३ १ २र ३ १ २ ३ १ २३ १ २
१६०३ अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु
३ १ २ ३ १ २
अवटस्य विसर्जने २

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१६०४ सिञ्चन्ति नमसावटमुच्चाचक्रं परिज्मानम्
३ १ २ ३ १ २
नीचीनबारमक्षितम् ३ १६(रा)

इति तृतीयः खण्डः ३

१ २ ३ १ २ ३ १ २ ३ १ २र
१६०५ मा भेम मा श्रमिष्मोग्रस्य सख्ये तव
३ २ ३ १ २ ३ १ २ ३ १ २र ३ २ ३ १ २
महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम् १

३ १ २र ३क २र ३ २ ३ २ ३ १ २
१६०६ सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति
२ ३ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३ १ २
मध्वा संपृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब २ १७(वी)

३ १ २ ३ १ २ ३ १ २र
१६०७ इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम
३ १ २ ३ १ २ ३ २ ३ १ २र
पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत १

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
१६०८ अयँ सहस्रमृषिभिः सहस्कृतः समुद्र इव पप्रथे
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये २ १८(रि)

२ ३२उ ३ २ ३ १ २ ३ २ ३ २
१६०९ यस्यायं विश्व आर्यो दासः शेवधिपा अरिः
३१ २ ३ २ ३ २ ३ १ २ ३ १ २र ३ २
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयिः १

३ २ ३ १ २ ३ २३ १ २ ३ १ २
१६१० तुरगयवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः
३ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३ १ २
अस्मे रयिः पप्रथे वृष्णयँ शवोऽस्मे स्वानास इन्दवः २ १६(त)

१ २ ३ १ २ ३ १ २
१६११ गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव
१ २ ३ २ ३ २ ३ १ २
शुचिं च वर्णमधि गोषु धारय १

१ २ ३ १ २ ३ १ २
१६१२ स नो हरीणां पत इन्दो देवप्सरस्तमः
१ २ ३ २ ३ १ २ ३ १ २
सखेव सख्ये नर्यो रुचे भव २

१ २ ३ २ ३ १ २र ३ १ २ ३ १ २
१६१३ सनेमि त्वमस्मदा अदेवं कं चिदत्रिणम्
३ १ २ ३ २ ३ २ ३ १ २ ३ २
साह्वाँ इन्दो परि बाधो अप द्वयुम् ३ २०(ल)

३ २३क २र ३ १ २ ३ १ २ ३ २ ३क २र
१६१४ अञ्जते व्यञ्जते समञ्जते क्रतुँ रिहन्ति मध्वाभ्यञ्जते
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
सिन्धोरुच्छ्वासे पतयन्तमुक्षणँ हिरगयपावाः पशुमप्सु गृभ्णते १

३ २ ३ १ २ ३ १ २र
१६१५ विपश्चिते पवमानाय गायत मही न धारात्यन्धो अर्षति
२ ३ २ ३ १ २र ३ २ ३ २ ३ १ २र ३ २ ३ १ २
अहिर्न जूर्णामति सर्पति त्वचमत्यो न क्रीडन्नसरद्वृषा हरिः २

३ १ २र ३ २ ३ २ ३ १ २ ३ १ २
१६१६ अग्रेगो राजाप्यस्तविष्यते विमानो अह्नां भुवनेष्वर्पितः
१ २ ३ १ २ ३ १ २ ३ २ ३ १२ ३ २ ३क २र
हरिर्घृतस्नुः सुदृशीको अर्णवो ज्योतीरथः पवते राय ओक्यः ३ २१(ले)

इति चतुर्थः खगडः ४

इति सप्तमप्रपाठकस्य तृतीयोऽर्धः सप्तमः प्रपाठकश्च समाप्तः ७-३

इति षोडशोऽध्यायः

अथ सप्तदशोऽध्यायः

अथाष्टमप्रपाठके प्रथमोऽर्धः

(१-१४) १, ७ शुनःशेप आजीगर्तिः २ मधुच्छन्दा वैश्वामित्रः ३ शंयुर्बार्हस्पत्यः ४ वसिष्ठो मैत्रावरुणिः ५ वामदेवो गौतमः ६ रेभसूनू काश्यपौ ८ नृमेध आंगिरसः ९, ११ गोषूक्त्यश्वसूक्तिनौ काणवायनौ १० श्रुतकक्षः सुकक्षो वा आङ्गिरसः १२ विरूप आंगिरसः १३ वत्सः काणवः ॥ १, ३, ७, १२ अग्निः २, ८-११, १३ इन्द्रः ४ विष्णुः ५ (१) वायु ५ (२-३) इन्द्रवायू ६ पवमानः सोमः ॥ १-२, ७, ९, १०, १२, १३ गायत्री ३, ८ प्रगाथः ४ त्रिष्टुप् ५, ६ अनुष्टुप् ११ उष्णिक् ॥

१६१७ विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः
चनो धाः सहसा यहो १

१६१८ यच्चिद्धि शश्वता तना देवंदेवं यजामहे
त्वे इद्धूयते हविः २

१६१९ प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः
प्रियाः स्वग्नयो वयम् ३ १(ही)

१६२० इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः
अस्माकमस्तु केवलः १

१६२१ स नो वृषन्नमुं चरुँ सत्रादावन्नपा वृधि
अस्मभ्यमप्रतिष्कुतः २

१६२२ वृषा यूथेव वँसगः कृष्टीरियर्त्योजसा
ईशानो अप्रतिष्कुतः ३ २(र)

१ २ ३२ ३ २उ ३ १ २
१६२३ त्वं नश्चित्र ऊत्या वसो राधाꣳसि चोदय
३ २ ३१ २र ३ १२ ३ २ ३ २ ३ १ २र
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः १

१ २ ३ १ २र ३ २ ३ १ २र ३१ २
१६२४ पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अग्ने हेडाꣳसि दैव्या युयोधि नोऽदेवानि हराꣳसि च २ ३(की)

१ २र ३ २ ३ २ ३ १ २र ३ १ २ ३ १ २
१६२५ किमित्ते विष्णो परिचक्ष्नि नाम प्र यद्ववक्षे शिपिविष्टो अस्मि
१ २र ३ १ २र ३२उ ३ १ २ ३ २ ३ १ २
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ १

१ २र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
१६२६ प्र तत्ते अद्य शिपिविष्ट हव्यमर्यः शꣳसामि वयुनानि विद्वान्
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २र ३ २
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके २

१ २ ३ १ २र ३ १ २ ३ २
१६२७ वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ३ ४(ते)

इति प्रथमः खण्डः १

१ २ ३ १ २ ३ २ ३ २ ३ १ २
१६२८ वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु
१ २ ३ १ २ ३ १ २ ३ १ २
आ याहि सोमपीतये स्पार्हो देव नियुत्वता १

१ २ ३ १ २ ३ १ २
१६२९ इन्द्रश्च वायवेषाꣳसोमानां पीतिमर्हथः
३ १ २र ३२उ ३ २ ३क २र
युवाꣳहि यन्तीन्दवो निम्नमापो न सध्र्यक् २

२ ३ १ २ ३ १ २ ३१ २
१६३० वायविन्द्रश्च शुष्मिणा सरथꣳ शवसस्पती
३ १ २ ३ २ ३ १ २ ३ १ २
नियुत्वन्ता न ऊतय आ यातꣳसोमपीतये ३ ५(ता)

१ २ ३ १ २र ३ १ २ ३ १ २र
१६३१ अध क्षपा परिष्कृतो वाजाँ अभि प्र गाहसे
१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
यदी विवस्वतो धियो हरिँ हिन्वन्ति यातवे १

१ २ ३ २ ३ १ २ ३ १ २
१६३२ तमस्य मर्जयामसि मदो य इन्द्रपातमः
१ २र ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
यं गाव आसभिर्दधुः पुरा नूनं च सूरयः २

१ २र ३ १ २ ३ २३क २र
१६३३ तं गाथया पुराण्या पुनानमभ्यनूषत
३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
उतो कृपन्त धीतयो देवानां नाम बिभ्रतीः ३ ६(लु)

२ ३ २ ३ १ २ ३ १ २ ३ १ २र
१६३४ अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः
३ १ २ ३ १ २
सम्राजन्तमध्वराणाम् १

१ २ ३ १ २र ३ १ २ ३ १ २
१६३५ स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः
३ २ ३ १ २
मीढ्वाँ अस्माकं बभूयात् २

१ २ ३ २ ३ २ ३ १ २ ३ २
१६३६ स नो दूराच्चासाच्च नि मर्त्यादघायोः
३ २उ ३ २ ३ १ २
पाहि सदमिद्विश्वायुः ३ ७(टि)

१ २ ३ १ २ ३ १ २र ३ १ २
१६३७ त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः १

१ २ ३ १ २ ३ १ २ ३ २उ ३ २ ३ १ २
१६३८ अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न मातरा
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि २ ८(टा)

इति द्वितीयः खण्डः २

३ १ २र ३२र ३ १ २
१६३९ यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत्
३ १ २३ २ ३ २
चक्राण ओपशं दिवि १

२ऽ १ २ ३ २३ १ २ ३ २
१६४० व्या३न्तरिक्षमतिरन्मदे सोमस्य रोचना
२ ३ १ २र ३ २
इन्द्रो यदभिनद्वलम् २

१ २र ३ १ २ ३ २ ३ १ २र ३ २
१६४१ उद्गा आजदङ्गिरोभ्य आविष्कृण्वन्गुहा सतीः
३ १ २ ३ २
अर्वाञ्चं नुनुदे वलम् ३ ९(पी)

१ २ ३ २३ १ २ ३ १ २
१६४२ त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम्
१ २ ३ १ २
आ च्यावयस्यूतये १

३ १ २र ३ १ २ ३ १ २र
१६४३ युध्मँ सन्तमनर्वाणँ सोमपामनपच्युतम्
१२ ३ १ २
नरमवार्यक्रतुम् २

१ २ ३२उ ३ २ ३ १ १
१६४४ शिक्षा ण इन्द्र राय आ पुरु विद्वाँ ऋचीषम
१ २ ३ २ ३ १ २
अवा नः पार्ये धने ३ १०(ता)

२ ३ १ २ ३ २ ३२उ ३ १ २ ३ १ २र
१६४५ तव त्यदिन्द्रियं बृहत्तव दक्षमुत क्रतुम्
१ २ ३ २ ३ १२
वज्रँ शिशाति धिषणा वरेण्यम् १

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१६४६ तव द्यौरिन्द्र पौँस्यं पृथिवी वर्धति श्रवः
२उ ३ १ २
त्वामापः पर्वतासश्च हिन्विरे २

१ २र ३ १ २र ३ १ २ ३ १ २
१६४७ त्वां विष्णुर्बृहन्क्षयो मित्रो गृणाति वरुणः

१ २र ३ २३ १२
त्वाँ शर्धो मदत्यनु मारुतम् ३ ११(ठी)

इति तृतीयः खण्डः ३

१२ ३ १२ ३१ २ ३१२
१६४८ नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः
१२३ १२
अमैरमित्रमर्दय १

३ २उ ३ १ २३१ २ ३१ २ ३ २
१६४९ कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम्
१२ ३१ २
उरुकृदुरु णस्कृधि २

१ २ ३१ २र ३१२
१६५० मा नो अग्ने महाधने परा वर्ग्भारभृद्यथा
३२३ २ ३ १ २
संवर्गँ सँ रयिं जय ३ १२(प)

१२ ३ २३ २ ३ १ २ ३१२
१६५१ समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः
३ १२३ १ २
समुद्रायेव सिन्धवः १

१ २३२ ३ १२३ १२ ३ १ २
१६५२ वि चिद्वृत्रस्य दोधतः शिरो बिभेद वृष्णिना
१२ ३१२
वज्रेण शतपर्वणा २

२३ १२ ३२उ ३१२
१६५३ ओजस्तदस्य तित्विष उभे यत्समवर्तयत्
२ ३१२३ १२
इन्द्रश्चर्मेव रोदसी ३ १३(तौ)

३२ ३ २ ३१ २ ३१२
१६५४ सुमन्मा वस्वी रन्ती सूनरी १

१ २ ३ १ २ ३ २ ३ १ २र ३ २
१६५५ सरूप वृषन्ना गहीमौ भद्रौ धुर्यावभि
२ ३ १ २र
ताविमा उप सर्पतः २

२र ३ १ २ ३ २ ३ १ २
१६५६ नीव शीर्षाणि मृढ्वं मध्य आपस्य तिष्ठति
१ २ ३ १ २ ३ २
शृङ्गेभिर्दशभिर्दिशन् ३ १४(यि)

इति चतुर्थः खराडः ४

इत्यष्टमप्रपाठकस्य प्रथमोऽर्धः ८-१ इति सप्तदशोऽध्यायः १७

अथाष्टादशोऽध्यायः

अथाष्टमप्रपाठके द्वितीयोऽर्धः ८-२

(१-१९) १ मेधातिथिः कारावः प्रियमेधश्चाङ्गिरसः २ श्रुतकक्षः सुकक्षो वा आङ्गिरसः ३ शुनःशेप आजीगर्तिः ४ शंयुर्बार्हस्पत्यः ५ मेधातिथिः कारावः ६, ९ वसिष्ठो मैत्रावरुणिः ७ वालखिल्यम् ८ अम्बरिषो वार्षागिरः ऋजिश्वा भारद्वाजश्च १० विश्वमना वैयश्वः ११ सोभरिः कारावः १२ सप्तर्षयः १३ कलिः प्रागाथः १४, १७ विश्वामित्रः प्रागाथः १५ मेध्यातिथिः कारावः १६ निध्रुविः काश्यपः १८ भरद्वाजो बार्हस्पत्यः ॥ १-२, ४, ६-७, ९-१०, १३, १५ इन्द्रः ३, ११, १८ अग्निः ५ विष्णुः ५ (६) देवो वा ८, १२, १६ पवमानः सोमः १४, १७ इन्द्राग्नी ॥ १-५, १४, १६-१८ गायत्री ६, ७, ९, १२, १३ प्रगाथः ८ अनुष्टुप् १० उष्णिक् ११ काकुभः प्रगाथः १५ बृहती ॥

१ २ ३ १ २ ३ १ २ ३ १ २
१६५७ पन्यंपन्यमित्सोतार आ धावत मद्याय
१ २ ३ २ ३ १ २
सोमं वीराय शूराय १

१ २र ३ १ २ ३ १ २ ३ १ २
१६५८ एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम्
१ २ ३ १ २र
इन्द्रं गीर्भिर्गिर्वणसम् २

१ २ ३ २ ३ १ २र ३ २उ ३ २
१६५९ पाता वृत्रहा सुतमा घा गमन्नारे अस्मत्
१ २ ३ १ २
नि यमते शतमूतिः ३ १(ति)

१ २ ३ १ २ ३१ २३ १ २
१६६० आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः
२उ ३ १ २
न त्वामिन्द्राति रिच्यते १

३ १ २ ३ १ २ ३ १ २र
१६६१ विव्यक्थ महिना वृषन्भक्षँ सोमस्य जागृवे
१ २ ३ १२
य इन्द्र जठरेषु ते २

१२ ३ २३ १ २
१६६२ अरं त इन्द्र कुक्षये सोमो भवतु वृत्रहन्
२३ १ २ ३ १ २
अरं धामभ्य इन्दवः ३ २(क)

१ २ ३ १ २ ३ १ २ ३ १ २
१६६३ जराबोध तद्विविड्ढि विशेविशे यज्ञियाय
१ २ ३ १ २ ३ २
स्तोमँ रुद्राय दृशीकम् १

१ २ ३ १ २ ३ २ ३ १ २ ३ २
१६६४ स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः
३ १ २र
धिये वाजाय हिन्वतु २

२ ३ १ २ ३ २ ३१ २ ३१ २
१६६५ स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः
३ २३ २ ३१ २
उक्थैरग्निर्बृहद्भानुः ३ ३(ह)

१ २ ३१ २र ३ २३ १ २
१६६६ तद्वो गाय सुते सचा पुरुहूताय सत्वने
२उ ३ २ ३ १२
शं यद्गवे न शाकिने १

२ ३ २ ३ १ २ ३१ २र ३ १ २
१६६७ न घा वसुर्नि यमते दानं वाजस्य गोमतः
२ ३ २३ २ ३ १२
यत्सीमुपश्रवद्गिरः २

३ १ २ ३ २उ ३ १ २र ३ १ २र
१६६८ कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहा गमत्

१ २ ३१ २
शचीभिरप नो वरत् ३ ४(फी)

इति प्रथमः खराडः १

३२उ ३ १ २ ३ १ २र ३ २
१६६९ इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्
१ २ ३ २
समूढमस्य पाँसुले १

१ २ ३ १ २र ३ १ २ ३ १ २र
१६७० त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः
२ ३ १ २ ३१ २
अतो धर्माणि धारयन् २

२ ३ १ २ ३ १ २ ३ १ २ ३ २
१६७१ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे
१ २ ३ २ ३ १ २
इन्द्रस्य युज्यः सखा ३

१ २र ३ २ ३ १ २र ३१ २
१६७२ तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः
३ २ ३ २ ३ १ २
दिवीव चक्षुराततम् ४

१ २र ३ १ २ ३ २ ३ १ २
१६७३ तद्विप्रासो विपन्युवो जागृवाँसः समिन्धते
२ ३ १ २३ २ ३ २
विष्णोर्यत्परमं पदम् ५

१ २ ३ १ २ ३ २ ३ १ २ ३ २
१६७४ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे
३ २उ ३ १ २
पृथिव्या अधि सानवि ६ ५(ठू)

१ २र ३ १ २ ३ २उ ३ १ २र
१६७५ मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन्
३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २र
आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि १

३ १ २र ३ १ २ ३२उ ३ २ ३ २उ ३ १ २
१६७६ इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते

२ ३   १ २   ३ १ २   ३ २ ३ २ ३ २उ   ३ १ २
इन्द्रे कामं जरितारो वसूयवो रथे न पादमा दधुः २ ६(डी)

१ २ ३ १ २ ३ १   २र
१६७७ अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत
३ २ ३१ २   ३ १२   ३ २ ३ १ २
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत १

२उ   ३ १ २   ३ १२   ३ २   ३ २उ   ३ १ २
१६७८ समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम्
२   ३ २ ३   १ २ ३   १   २र   ३   २ ३ १ २
सँ शुक्रासः शुचयः सं गवाशिरः सोमा इन्द्रममन्दिषुः २ ७(ठा)

१ २   ३ १ २   ३ १   २र
१६७९ इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे
१२ ३ १ २   ३ १ २   ३ १ २
नरे च दक्षिणावते वीराय सदनासदे १

१   २   ३ १ २ ३ २ ३ २ २ ३१ २
१६८० तँ सखायः पुरूरुचं वयं यूयं च सूरयः
३   २ ३   १ २   ३ २ ३   १ २
अश्याम वाजगन्ध्यँ सनेम वाजस्पत्यम् २

२ ३   १   २ ३ १   २र
१६८१ परि त्यँ हर्यतँ हरिं बभ्रुं पुनन्ति वारेण
यो देवान्विश्वाँ इत्परि मदेन सह गच्छति ३ ८(हा)

१   २र   ३
१६८२ कस्तमिन्द्र त्वा वसो मर्त्यो दधर्षति
श्रद्धा इत्तेमघवन् पार्ये दिवि वाजी वाजं सिषासति १

३ १ २   ३१ २   ३ १ २र   ३ १   २र
१६८३ मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु
२ ३ १ २   ३ २ ३ १ २   ३ २
तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता २ ९(यि)

इति द्वितीयः खण्डः २

२ ३ १ २ ३ १ २   ३ १ २ ३ १ २
१६८४ एदु मधोर्मदिन्तरँ सिञ्चाध्वर्यो अन्धसः

३ २उ ३१ २र ३ १ २
एवा हि वीर स्तवते सदावृधः १

१ २ ३ १ २ ३ १ २
१६८५ इन्द्र स्थातर्हरीणां न किष्टे पूर्व्यस्तुतिम्
१ २ ३ १ २ ३ २ ३ १ २
उदानँश शवसा न भन्दना २

२ ३ १ २ ३ २ ३ १ २ ३ १ २
१६८६ तं वो वाजानां पतिमहूमहि श्रवस्यवः
१ २ ३ १ २ ३ १ २
अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ३ १०(क)

१ २ ३क २र ३ १ २ ३ १ २३ १ २
१६८७ तं गूर्द्धया स्वर्णरं देवासो देवमरतिं दधन्विरे
३ २ ३ १ २
देवत्रा हव्यमूहिषे १

१ २ ३१ २ ३ १ २ ३ १२
१६८८ विभूतरातिं विप्र चित्रशोचिषमग्निमीडिष्व यन्तुरम्
३ १ २र ३ १ २ ३ १ २ ३ २३ १ २
अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम् २ ११(या)

१ २ ३ १ २र ३ १ २र ३ १ २
१६८९ आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया
२ ३ २ ३ २ ३क २र ३ २ ३ २ ३ १ २
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे १

१ २ ३ १ २र ३क २र ३ २उ ३ १ २ ३ २
१६९० स मामृजे तिरो अण्वानि मेष्यो मीड्वान्त्सप्तिर्न वाजयुः
३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
अनुमाद्यः पवमानो मनीषिभिः सोमो विप्रेभिर्ऋक्वभिः २ १२(तु)

३ १ २ ३ १ २र ३ २ ३ १ २
१६९१ वयमेनमिदा ह्योऽपीपेमेह वज्रिणम्
१ २ ३ १ २र ३ २ ३ २ ३ १ २ ३ २
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते १

१ २ ३ १ २ ३ २ ३ २ ३ १ २
१६९२ वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति
२उ ३ १ २ ३२उ ३ २ ३ २ ३१ २ ३ २
सेमं न स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया २ १३(खा)

१ २ ३ २ ३२उ ३ १ २
१६९३ इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः
१ २ ३ २ ३क२र
तद्वां चेति प्र वीर्यम् १

१ २ ३ १ २ ३ २र
१६९४ इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः
ऋतस्य पथ्या३ अनु २

१ २ ३ १ २
१६९५ इन्द्राग्नी तविषाणि वां सधस्थानि प्रयाँसि च
युवोरप्तूर्यं हितम् ३ १४(क)

१ २ ३२उ २र
१६९६ क ईं वेद सुते सचा पिबन्तं कद्वयो दधे
अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्र्यन्धसः १

३ २ ३ १ २र३ १ २ ३ २ ३१ २
१६९७ दाना मृगो न वारणः पुरुत्रा चरथं दधे
१ २ ३ १ २ ३ २ ३१ २ ३ १ २३ १ २
न किष्ट्वा नि यमदा सुते गमो महाँश्चरस्योजसा २

२ ३ १ २र ३ १ २र ३ १ २
१६९८ य उग्रः सन्ननिष्टृतः स्थिरो रणाय सँस्कृतः
१ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत् ३ १५(ही)

इति तृतीयः खण्डः ३

१ २ ३ १ २ ३ २ ३ १ २
१६९९ पवमाना असृक्षत सोमाः शुक्रास इन्दवः
३ १ २र ३ १ २
अभि विश्वानि काव्या १

१ २ ३२उ ३ १ २
१७०० पवमाना दिवस्पर्यन्तरिक्षादसृक्षत
३ २उ ३ १ २
पृथिव्या अधि सानवि २

१ २ ३ १ २ ३ १ २ ३ १ २
१७०१ पवमानास आशवः शुभ्रा असृग्रमिन्दवः
२ ३ २ ३ २३ १२
घ्नन्तो विश्वा अप द्विषः ३ १६(फ)

३ १ २३१ २ ३ २ ३ १२
१७०२ तोशा वृत्रहणा हुवे सजित्वानापराजिता
३ १ २ ३ १२
इन्द्राग्नी वाजसातमा १

१ २ ३ १ २
१७०३ प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः
इन्द्राग्नी इष आ वृणे २

१ २ ३ १ २र
१७०४ इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम्
साकमेकेन कर्मणा ३ १७(र)

१ २ ३ १ २ ३ १ २
१७०५ उप त्वा रण्वसंदृशं प्रयस्वन्तः सहस्कृत
१ २ ३ २३ १२
अग्ने ससृज्महे गिरः १

१२ ३ १ २ ३ २ ३१ २ ३ १ २ ३ २
१७०६ उप च्छायामिव घृणेरगन्म शर्म ते वयम्
२ ३ १२
अग्ने हिरण्यसंदृशः २

२ ३ १ २ ३ २ ३ १ २ ३ १ २र
१७०७ य उग्र इव शर्यहा तिग्मशृङ्गो न वँसगः
२३ १ २ ३ १ २
अग्ने पुरो रुरोजिथ ३ १८(य)

३ १ २ ३२ ३ २ ३ १ २३ १ २
१७०८ ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम्
१ २ ३ १ २
अजस्रं घर्ममीमहे १

२ ३१ २ ३ २ ३ २ ३क २र ३२
१७०९ य इदं प्रतिपप्रथे यज्ञस्य स्वरुत्तिरन्
३ १ २र ३ २
ऋतूनुत्सृजते वशी २

३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
१७१० अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य
३ २उ ३ १ २
सम्राडेको विराजति ३ १९(का)

इति चतुर्थः खण्डः ४

इत्यष्टमप्रपाठके द्वितीयोऽर्धः ८ - २

इत्यष्टादशोऽध्यायः १८

अथैकोनविंशोऽध्यायः

अथाष्टमप्रपाठके तृतीयोऽर्धः ८-३

(१-१८) १ विरूप आङ्गिरसः २, १८ अवत्सारः काश्यपः ३ विश्वामित्रो गाथिनः ४ देवातिथिः काण्वः ५, ८, ९, १६ गोतमो राहूगणः ६ वामदेवो गौतमः ७ प्रस्कण्वः काण्वः १० वसुश्रुत आत्रेयः ११ सत्यश्रवा आत्रेयः १२ अवस्युरात्रेयः १३ बुधगविष्टिरावात्रेयौ १४ कुत्स आङ्गिरसः १५ अत्रिर्भौमः १७ दीर्घतमा औचथ्यः ॥ १, १०, १३ अग्निः २, १८ पवमानः सोमः ३-५ इन्द्रः ६, ८, ११, १४, १६ उषाः ७, ९, १२, १५, १७ अश्विनौ ॥ १-२, ६-७, १८ गायत्री ३, १३-१५ त्रिष्टुप् ४-५ प्रगाथः ८-९ उष्णिक् १०-१२ पङ्क्तिः १६, १७ जगती ॥

३ २ ३ २ ३ १ २ ३ १ २ ३ २
१७११ अग्निः प्रत्नेन जन्मना शुम्भानस्तन्व३ँ स्वाम्
३ १ २र
कविर्विप्रेण वावृधे १

३ १ २र ३ १ २ ३ १ २ ३ १ २
१७१२ ऊर्जो नपातमा हुवेऽग्निं पावकशोचिषम्
३ २ ३ १ २ ३२
अस्मिन्यज्ञे स्वध्वरे २

१ २ ३ १ २र ३ १ २ ३ १ २
१७१३ स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा

३ १ २र ३ १ २
देवैरा सत्सि बर्हिषि ३ १(ली)

२ ३ १ २ ३ १ २ ३ १ २
१७१४ उत्ते शुष्मासो अस्थू रक्षो भिन्दन्तो अद्रिवः
३ २ ३ १ २ ३ १ २
नुदस्व याः परिस्पृधः १

३ १ २ ३ १ २र ३ १ २र ३ २
१७१५ अया निजघ्निरोजसा रथसङ्गे धने हिते
२ ३ १ र ३ २
स्तवा अबिभ्युषा हृदा २

१ २ ३ २ ३ २उ ३ १ २ ३क २र
१७१६ अस्य व्रतानि नाधृषे पवमानस्य दूढ्या
३ १ २र ३ १ २
रुज यस्त्वा पृतन्यति ३

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
१७१७ तँ हिन्वन्ति मदच्युतँ हरिं नदीषु वाजिनम्
२ ३ १ २ ३ २
इन्दुमिन्द्राय मत्सरम् ४ २(पी)

२ ३ १ २ ३ १ २ ३ २ ३ १ २
१७१८ आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः
२ ३ २ ३ १ २ ३ २उ ३ २उ ३ १ २ ३ १ २
मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि १

३ १ २ ३ २ ३ २ ३ २ ३ २ ३ २
१७१९ वृत्रखादो वलँ रुजः पुरां दर्मो अपामजः
२ ३ १ २ ३ १ २ ३१ २र ३ १ २ ३ २
स्थाता रथस्य हर्योरभिस्वर इन्द्रो दृढा चिदारुजः २

३ १ २ ३ १ २ ३ १ २ ३ १ २
१७२० गम्भीराँ उदधीँरिव क्रतुं पुष्यसि गा इव
१ २ ३ १ २र ३ १ २ ३ २ ३ १ २
प्र सुगोपा यवसं धेनवो यथा हृदं कुल्या इवाशत ३ ३(छा)

१ २ ३ २ ३ २ ३२उ ३ १ २र
१७२१ यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम्
३ १ २ ३ २उ ३ १ २ ३ १ २ ३ २उ ३ १ २
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब १

१ २ ३ १ २ ३१ २ ३ २
१७२२ मन्दन्तु त्वा मघवन्निन्द्रेन्दवो राधोदेयाय सुन्वते
३ २ ३ १ २ ३ २ ३२उ ३ १ २ ३ १ २
आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तद्दधिषे सहः २ ४(घ)

२ ३ १ २र ३ १ २ ३ १ २
१७२३ त्वमङ्ग प्र शँसिषो देवः शविष्ठ मर्त्यम्
२उ ३ १ २ ३ २ ३ १ २ ३ १ २
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः १

२ ३ १ २ ३ २ २ ३१ २ ३ १ २र ३ १ २
१७२४ मा ते राधाँसि मा त ऊतयो वसोऽस्मान्कदा चना दभन्
१ २ ३ १ २ ३ १ २ ३ २ ३ २
विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ २ ५(का)

इति प्रथमः खण्डः १

२ ३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
१७२५ प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः
३ १ २ ३ २
दिवो अदर्शि दुहिता १

१ २ ३ १ २ ३ १ २र ३ १ २
१७२६ अश्वेव चित्रारुषी माता गवामृतावरी
१ २ ३ १ २ ३ २
सखा भूदश्विनोरुषाः २

३ १ २र ३ १ २ ३ २ ३ १ २र
१७२७ उत सखास्यश्विनोरुत माता गवामसि
३ २ ३ १ २
उतोषो वस्व ईशिषे ३ ६(लि)

३ २ ३ १ २र २क २र ३ २ ३ २
१७२८ एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः
३ १ २ ३ २
स्तुषे वामश्विना बृहत् १

२ ३ १ २र ३ १ २ ३ २
१७२९ या दस्रा सिन्धुमातरा मनोतरा रयीणाम्
३ २ ३ १ २ ३ १ २
धिया देवा वसुविदा २

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१७३० वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि
२ ३ २ ३ २ ३ १ २
यद्वाँ रथो विभिष्पतात् ३ ७(लि)

२ ३ २ ३ १ २र ३ १ २
१७३१ उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति
१ २ ३ २ ३ १ २ ३ १ २
येन तोकं च तनयं च धामहे १

१ २ ३ १ २र ३ १ २
१७३२ उषो अद्येह गोमत्यश्वावति विभावरि
३ २ ३ १ २
रेवदस्मे व्युच्छ सूनृतावति २

३ १ २र ३ १ २ ३ २ ३ १ २
१७३३ युङ्क्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः
१ २ ३ २ ३ १ २ ३ १ २
अथा नो विश्वा सौभगान्या वह ३ ८(हि)

१ २ ३ २ ३ १ २र ३ १ २
१७३४ अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत्
३ २उ ३ १ २ ३ १ २
अर्वाग्रथँ समनसा नि यच्छतम् १

२उ ३ १ २ ३ १ २ ३ १ २र
१७३५ एह देवा मयोभुवा दस्रा हिरण्यवर्तनी
३ १ २ ३ १ २
उषर्बुधो वहन्तु सोमपीतये २

२ ३ २उ ३ २ ३ २उ ३ १ २ ३ १ २
१७३६ यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः
२ ३ १ २ ३ २
आ न ऊर्जं वहतमश्विना युवम् ३ ९(भा)

इति द्वितीयः खण्डः २

३ १ २र ३ २उ ३ २ ३ १ २र ३ १ २
१७३७ अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः
२ ३ १ २ ३ २उ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
अस्तमर्वन्त आशवोस्तं नित्यासो वाजिन इषँ स्तोतृभ्य आ भर १

३ २उ ३ १ २ ३ १ २र ३ १ २
१७३८ अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः
३ २र ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
अग्नी राये स्वाभुव ँ स प्रीतो याति वार्यमिष ँ स्तोतृभ्य आ भर २

२ ३ १ २र ३२उ ३ १ २ ३ १ २
१७३९ सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः
१ २र ३ २ ३ १ २ ३ १ २ ३२ ३ १ २ ३ २ ३ १ २
समर्वन्तो रघुद्रुवः स ँ सुजातासः सूरय इष ँ स्तोतृभ्य आ भर ३ १०(घु)

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
१७४० महे नो अद्य बोधयोषो राये दिवित्मती
१ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते १

१ २ ३ १ २ ३ १ २र
१७४१ या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः
१ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते २

१ २ ३ २ ३ १ २ ३क२र
१७४२ सा नो अद्याभरद्वसुर्व्युच्छा दुहितर्दिवः
२उ ३ १ २ ३ १ २ ३ १ २र ३ १ २
यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ३ ११(तु)

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१७४३ प्रति प्रियतम ँ रथं वृषणं वसुवाहनम्
३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
स्तोता वामश्विनावृषि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुत ँ हवम् १

३ १ २ ३ १ २र ३ १ २र
१७४४ अत्यायातमश्विना तिरो विश्वा अह ँ सना
२ ३ १२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
दस्रा हिरण्यवर्तनी सुषुम्णा सिन्धुवाहसा माध्वी मम श्रुत ँ हवम् २

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
१७४५ आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम्
२ ३ १२ ३ १ २ ३ २ ३ १ २ ३ १ २
रुद्रा हिरण्यवर्तनी जुषाणा वाजिनीवसू माध्वी मम श्रुत ँ हवम् ३ १२(वा)

इति तृतीयः खण्डः ३

१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३१ २ ३ २३ १ २
१७४६ अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम्
३ १ २३ २ ३ २३ १ २ ३ २ ३१ २ ३ २ ३१ २
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ १

१ २ ३ १ २ ३ १ २ ३ २३ २ ३ २ ३ १ २ ३ १२
१७४७ अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात्
१ २ ३ १ २ ३ १ २ २ ३ १ २र ३ १२
समिद्धस्य रुशददर्शि पाजो महान्देवस्तमसो निरमोचि २

१ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २३ २
१७४८ यदीं गणस्य रशनामजीगः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः
१ २र ३ १ २ ३ २ ३ १ २ ३ १ २
आद्दक्षिणा युज्यते वाजयन्त्युत्तानामूर्ध्वो अधयज्जुहूभिः ३ १३(लि)

३२उ ३ १ २ ३ २ ३ १ २ ३१ २ ३ १ २ ३ २
१७४९ इदँ श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा
२ ३ १ २ ३ २ ३ २ ३ २उ ३ २ ३ १ २
यथा प्रसूता सवितुः सवायैवा रात्र्युषसे योनिमारैक् १

१ २ ३ १ २ ३ २ ३ १२ ३ १ २र
१७५० रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः
३ १ २ ३ १ २ ३ २उ ३ १ २ ३ २
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने २

३ २उ ३ १ २ ३ २उ ३ १ २ ३ १ २
१७५१ समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे
१ २ ३ १ २ ३ २ ३ २ ३ २ ३ १२ ३ १ २
न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ३ १४(म)

१ २ ३ २ ३ २ ३ १ २ ३ १ २र ३ १ २र
१७५२ आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
अर्वाञ्चा नूनँ रथ्येह यातं पीपिवाँसमश्विना घर्ममच्छ १

१ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ १ २र ३ २
१७५३ न सँस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह
१ २ ३ २ ३ १ २ ३ १ २र ३ २ ३ १ २
दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शम्भविष्ठा २

३ १ २ ३ २ ३१ २र ३ १ २३ १ २ ३ १ २
१७५४ उता यातँ संगवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य
२ ३ २ ३ १ २ ३ १ २ ३ १ २र ३ २३ १ २र
दिवा नक्तमवसा शन्तमेन नेदानीं पीतिरश्विना ततान ३ १५(लो)

इति चतुर्थः खराडः ४

३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
१७५५ एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते
३ १ २र ३ २ ३ २ ३ १ २र ३ १ २
निष्कृरावाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः १

१ २ ३ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १ २
१७५६ उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं भानुमरुषीरशिश्रयुः २

१ २ ३ १ २३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
१७५७ अर्चन्ति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः
२३ १ २ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ २
इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ३ १६(कि)

१ २ ३ १ २र ३ २ ३ २ऽ २ ३ २ ३क २र ३ १ २
१७५८ अबोध्यग्निर्ज्म उदेति सूर्यो व्यू३षाश्चन्द्रा मह्यावो अर्चिषा
१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २उ ३ १ २
आयुक्षातामश्विना यातवे रथं प्रासावीद्देवः सविता जगत्पृथक् १

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१७५९ यद्युञ्जाथे वृषरामश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम्
३ २ ३ २ ३ १ २ ३२उ ३ १ २
अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि २

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१७६० अर्वाङ त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
त्रिबन्धुरो मघवा विश्वसौभगः शं न आ वक्षद्द्विपदे चतुष्पदे ३ १७(छा)

२ ३ १ २ ३ १ २ ३ १ २र ३ १ २
१७६१ प्र ते धारा असश्चतो दिवो न यन्ति वृष्टयः
२ ३ १ २ ३ १ २
अच्छा वाजँ सहस्त्रिराम् १

३ २ ३ २ ३ २ ३ २ ३ १ २
१७६२ अभि प्रियाणि काव्या विश्वा चक्षाणो अर्षति
१ २ ३ १ २र
हरिस्तुञ्जान आयुधा २

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ २
१७६३ स मर्मृजान आयुभिरिभो राजेव सुव्रतः
३ १ २र
श्येनो न वँसु षीदति ३

२ ३ १ २ ३ २उ ३ १ २ ३ १ २र
१७६४ स नो विश्वा दिवो वसूतो पृथिव्या अधि
३ १ २ ३ १ २
पुनान इन्दवा भर ४ १८(ती)

इति पञ्चमः खण्डः ५

इति अष्टमप्रपाठके तृतीयोऽर्धः अष्टमप्रपाठकश्च समाप्तः ८

इत्येकोनविंशोऽध्यायः १९

अथ विंशोऽध्यायः

अथ नवमप्रपाठके प्रथमोऽर्धः ९-१

(१-१८) १ नृमेध आङ्गिरसः २-३ प्रियमेध आङ्गिरसः ४ दीर्घतमा औचथ्यः ५ वामदेवो गौतमः ६ प्रस्कण्वः काण्वः ७ बृहदुक्थो वामदेव्यः ८ बिन्दुः पूतदक्षो वा आंगिरसः ९, १७ जमदग्निर्भार्गवः १० सुकक्ष आंगिरसः ११-१३ वसिष्ठो मैत्रावरुणिः १४ सुदाः पैजवनः १५ मेधातिथिः काण्वः १६ नीपातिथिः काण्वः १८ परुच्छेपो दैवोदासिः ॥ १, १७ पवमानः सोमः ३ ७, १०, १६ इन्द्रः ४-६, १८ अग्निः ९ मरुतः १० सूर्यः ॥ १, ८, १०, १५-१७ गायत्री ३ अनुष्टम्मुखः प्रगाथः ४, ११, १३ विराट् ५ पदपंक्तिः ६, ९, १२ प्रगाथः ७ त्रिष्टुप् १४ शक्वरी १८ अत्यष्टिः ॥

२ ३ १ २ ३ १ २ ३ १ २र
१७६५ प्रास्य धारा अक्षरन्वृष्णः सुतस्यौजसः
३ १ २र ३ १ २
देवाँ अनु प्रभूषतः १

१ २ ३ १ २ ३ १ २ ३१ २ ३ २
१७६६ सप्तिं मृजन्ति वेधसो गृणन्तः कारवो गिरा
१ २ ३ २३क २र
ज्योतिर्जज्ञानमुक्थ्यम् २

३ १ २ ३ १ २ ३ १ २
१७६७ सुषहा सोम तानि ते पुनानाय प्रभूवसो
१ २ ३ १ २
वर्धा समुद्रमुक्थ्य ३ १(यि)

३ २ ३ २उ ३ २ ३ २ ३ १ २ ३ २ ३
१७६८ एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे १

१ २र ३ २ ३ २ ३ २ ३ १ २
१७६९ त्वामिच्छवसस्पते यन्ति गिरो न संयतः २

२ ३ २ ३ १ २ ३ २उ
१७७० वि स्रुतयो यथा पथा इन्द्र त्वद्यन्तु रातयः ३ २(प)

२ ३ २ ३ २ ३ १ २
१७७१ आ त्वा रथं यथोतये सुम्नाय वर्त्तयामसि
तुविकूर्मिमृतीषहमिन्द्रं शविष्ठ सत्पतिम् १

१ २ ३ १ २ ३ १ २ ३ १ २
१७७२ तुविशुष्म तुविक्रतो शचीवो विश्वया मते
१ २ ३ २
आ पप्राथ महित्वना २

१ २ ३ २ ३ १ २र ३ १ २ ३ १ २
१७७३ यस्य ते महिना महः परि ज्मायन्तमीयतुः
२ ३ १ २ ३ १ २
हस्ता वज्रँ हिरण्ययम् ३ ३(व)

२र ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ १ २
१७७४ आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो३ नार्वा
२ ३ १ २ ३ २ ३ १ २
सूरो न रुरुक्वाञ्छतात्मा १

३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
१७७५ अभि द्विजन्मा त्री रोचनानि विश्वा रजाँसि शुशुचानो अस्थात्

२ ३ १ २ ३ २ ३ १ २
होता यजिष्ठो अपाँ सधस्थे २

३२उ ३ २ ३ २ ३ १ २ ३ १ २र ३ २
१७७६ अयँ स होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या
२ ३ १ २ ३ १ २ ३ १ २
मर्तो यो अस्मै सुतुको ददाश ३ ४(छ)

२ ३ २ ३ २ ३ २उ ३ २ ३ २ ३ १ २ ३ १ २
१७७७ अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रँ हृदिस्पृशम्
३ १ २ ३ १ २
ऋध्यामा त ओहैः १

२ ३क २र ३ १ २ ३ २ ३ १ २ ३ २
१७७८ अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः
३ २ ३ १ २ ३ २ ३ १ २
रथीर्ऋतस्य बृहतो बभूथ २

३ १ २ ३ १ २र ३ २ ऽऽ १ २र
१७७९ एभिर्नो अर्कैर्भवा नो अर्वाङ्क्स्व३ र्ण ज्योतिः
२ ३ १ २ ३ २ ३ १ २
अग्ने विश्वेभिः सुमना अनीकैः ३ ५(चि)

इति प्रथमः खण्डः १

२ ३ १ २ ३ १ २ ३ १ २र
१७८० अग्ने विवस्वदुषसश्चित्रँ राधो अमर्त्य
२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः १

२ ३ २ ३ १ २र ३ २ ३ १ २ ३ १२ ३ १ २
१७८१ जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम्
३ २३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् २ ६(ला)

३ १ २ ३ १ २र ३ २ २र ३ १ २ ३ १ २
१७८२ विधुं दद्राणँ समने बहूनां युवानँ सन्तं पलितो जगार
३ १ २ ३ १ २ ३ २उ ३ २३ १ २र
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान १

१ २ ३ १ २ ३ १ २ ३ २उ ३ १ २र ३ १ २र
१७८३ शाक्मना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीडः

२ ३ १ २ ३ २उ ३ १ २ ३ २ ३२उ ३ १ २र
यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता २

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
१७८४ ऐभिर्ददे वृष्ण्या पौँस्यानि येभिरौक्षद्वृत्रहत्याय वज्री
१ २र ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
ये कर्मणः क्रियमाणस्य मह्न ऋृते कर्ममुदजायन्त देवाः ३ ७(घे)

२ ३ १ २ ३ २ ३ १ २र ३ १ २
१७८५ अस्ति सोमो अयँ सुतः पिबन्त्यस्य मरुतः
३ २ ३ १ २ ३ १ २
उत स्वराजो अश्विना १

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २
१७८६ पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः
३ २ ३ १ २
त्रिषधस्थस्य जावतः २

३ १ २ ३ २ ३ १ २र ३ २ ३ १ २
१७८७ उतो न्वस्य जोषमा इन्द्रः सुतस्य गोमतः
३ १ २र
प्रातर्होतेव मत्सति ३ ८(ली)

२ ३ १ २ ३ १ २ ३ १ २
१७८८ बण्महाँ असि सूर्य बडादित्य महाँ असि
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि १

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१७८९ बट् सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि
३ २ ३ १ २ ३क२र ३ १ २ ३२उ ३१ २
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् २ ९(त)

इति द्वितीयः खण्डः २

१ २ ३ १ २ ३ २ ३ १ २
१७९० उप नो हरिभिः सुतं याहि मदानां पते
१ २ ३ १ २ ३ २
उप नो हरिभिः सुतम् १

३ १ २र ३ १ २ ३ १ २र ३ १ २
१७९१ द्विता यो वृत्रहन्तमो विद इन्द्रः शतक्रतुः

१२ ३ १ २ ३ २
उप नो हरिभिः सुतम् २

१ २र ३ १ २र ३ १ २
१७९२ त्वँ हि वृत्रहन्नेषां पाता सोमानामसि
१२ ३ १ २ ३ २
उप नो हरिभिः सुतम् ३ १०(री)

१ २ ३१ २३ १ २ ३ १ २ ३ १ २ ३ १ २
१७९३ प्र वो महे महेवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम्
१ २ ३ १ २र ३ २
विशः पूर्वीः प्र चर चर्षणिप्राः १

३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
१७९४ उरुव्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म जनयन्त विप्राः
१ २ ३ २ ३ १ २ ३ १ २
तस्य व्रतानि न मिनन्ति धीराः २

२ ३ २ ३१ २ ३ २ ३ १ २र ३ १ २
१७९५ इन्द्रं वाणीरनुत्तमन्युमेव सत्रा राजानं दधिरे सहध्यै
१ २ ३ २ ३ २
हर्यश्वाय बर्हया समापीन् ३ ११(हि)

१ २ ३ १ २३ २ ३ १ २३१ २
१७९६ यदिन्द्र यावतस्त्वमेतावदहमीशीय
३ २३ १ २ ३ १ २३ १ २
स्तोतारमिद्दधिषे रदावसो न पापत्वाय रँसिषम् १

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २र ३ १ २
१७९७ शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे
२र ३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ २
न हि त्वदन्यन्मघवन्न आप्यं वस्यो अस्ति पिता च न २ १२(ता)

३ १ २र ३२उ ३ २ ३ २३ १ २ ३ २
१७९८ श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो मनीषाम्
३ २उ ३ १ २ ३ २ ३ २
कृष्वा दुवाँस्यन्तमा सचेमा १

२ ३ २ ३ १ २ ३२ ३ १ २ ३ १ २३क२र ३ २
१७९९ न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान्
१ २ ३ १ २
सदा ते नाम स्वयशो विवक्मि २

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
१८०० भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वामित्
२उ ३ १ २ ३ १ २
मारे अस्मन्मघवञ्ज्योक्कः ३ १३(बा)

इति तृतीयः खण्डः ३

१ २ ३ १ २र ३ १ २
१८०१ प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
३ १ २ ३ २ ३ २ ३ १ २ ३ २
अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रहा ।
३ १ २ ३ १ २र ३ १ २ ३ २उ ३ १ २
अस्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु १

२उ ३ १ २ ३ २ ३ २ ३ १ २
१८०२ त्वँ सिन्धूँरवासृजोऽधराचो अहन्नहिम् ।
३ १ २ ३ १ २ ३ १ २
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यम् ।
२ ३ १ २ ३ १ २ ३ १ २ ३ २उ ३ १ २
तं त्वा परि ष्वजामहे नभन्तामन्यकेषां ज्याका अधि धन्वसु २

२र ३ १ २ ३ १ २ ३ १ २
१८०३ वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः ।
१ २ ३ १ २ ३ १ २र ३ १ २
अस्तासि शत्रवे वधं यो न इन्द्र जिघाँसति ।
१ २ ३ २ ३ २उ ३ १ २ ३ १ २ ३ २उ ३ १ २
या ते रातिर्ददिवसु नभन्तामन्यकेषां ज्याका अधि धन्वसु ३ १४(टि)

३ २उ ३ १ २ ३ १ २र ३ १ २
१८०४ रेवाँ इद्रेवत स्तोता स्यात्वावतो मघोनः
१ २ ३ १ २
प्रेदु हरिवः सुतस्य १

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २र
१८०५ उक्थं च न शस्यमानं नागो रयिरा चिकेत
१ २ ३ २ ३ १ २
न गायत्रं गीयमानम् २

१ २ ३ २ ३ १ २र ३ १ २
१८०६ मा न इन्द्र पीयत्नवे मा शर्धते परा दाः
१ २ ३ १ २
शिक्षा शचीवः शचीभिः ३ १५(ति)

१ २ ३ १ २ ३ २ ३ १ २ ३ २
१८०७ एन्द्र याहि हरिभिरुप कगवस्य सुष्टुतिम्
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
दिवो अमुष्य शासतो दिवं यय दिवावसो १

२ ३ २ ३ १२ ३ २ ३ १ २ ३ १ २
१८०८ अत्रा वि नेमिरेषामुरां न धूनुते वृकः
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
दिवो अमुष्य शासतो दिवं यय दिवावसो २

२ ३ २ ३ १ २ ३ २ ३ १ २र
१८०९ आ त्वा ग्रावा वदन्निह सोमी घोषेण वद्मतु
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
दिवो अमुष्य शासतो दिवं यय दिवावसो३ ३ १६(व)

१ २ ३ २ ३ १ २ ३ १ २
१८१० पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः १

२ ३ १ २ ३ १ २ ३ २ ३ १ २
१८११ ते सुतासो विपश्चितः शुक्रा वायुमसृक्षत २

१ २ ३ १ २ ३ २ ३ १ २
१८१२ असृग्रं देववीतये वाजयन्तो रथा इव ३ १७(रौ)

इति चतुर्थः खगडः ४

३ १ २र ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ २ ३ २
१८१३ अग्निँ होतारं मन्ये दास्वन्तं वसोः सूनुँ सहसो जातवेदसं विप्रं न
३ १ २
जातवेदसम् ।
२ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
य ऊर्ध्वरो स्वध्वरो देवो देवाच्या कृपा ।
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः १

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३
१८१४ यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गिरसां विप्र मन्मभिर्विप्रेभिः शुक्र
१ २
मन्मभिः।
१ २ ३ १ २र ३ २
परिज्मानमिव द्याँ होतारं चर्षणीनाम् ।

३ १ २ ३ १२३ २ ३२उ ३ १२ ३२३ १२
शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु जूतये विशः २

२उ ३ २ ३ १ २ ३१ २ ३ १ २ ३ १ २ ३१ २३ १ २र ३२
१८१५ स हि पुरू चिदोजसा विरुक्मता दीद्यानो भवति द्रुहन्तरः परशुर्न द्रुहन्तरः ।
३ २ ३ २ ३ १ २ ३ २ ३१ २ ३ २ ३२
वीडु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरम् ।
३ १ २ ३ १ २ ३ २ ३ १ २
निष्षहमाणो यमते नायते धन्वासहा नायते ३ १८(ठी)

इति नवमप्रपाठके प्रथमोऽर्धः ८-१

२

अथ नवमप्रपाठके द्वितीयोऽर्धः ९-२

(१-१३) १ अग्निः पावकः २ सोभरिः काण्वः ३ अरुणो वैतहव्यः ५-६ अवत्सारः काश्यपः ९ गोषूक्त्यश्वसूक्तिनौ काण्वायनौः १० त्रिशिरात्वाष्ट्रः सिन्धुद्वीप आम्बरीषो वा ११ उलो वातायनः १३ वेनो भार्गवः ॥ ४, ७, ८, १२ -- १-४, ७-८, १२ अग्निः ५-६ विश्वे देवाः ९ इन्द्रः १० आपः ११ वायुः १३ वेनः ॥ १ (१-२) विष्टारपंक्तिः १ (३-५) सतोबृहती
१ (६) उपरिष्टाज्ज्योतिः २ काकुभः प्रगाथः ३ जगती ५-६, १३ त्रिष्टुप् ४, ७-११ गायत्री ४, ७, ८, १२ ॥

२३ २३ २ ३ २ ३ १ २ ३ १ २
१८१६ अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो ।
१ २ ३ १ २ ३ १ २ ३ २ १ २ ३ १ २
बृहद्भानो शवसा वाजमुक्थ्याँ३ दधासि दाशुषे कवे १

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
१८१७ पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना
३ २ ३ १ २ ३ २३ १ २ ३ २ ३ १ २ ३ २
पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे २

१ २ ३ २ ३ १ २ ३ १ २ ३ २
१८१८ ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः
२उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
त्वे इषः सं दधुर्भूरिवर्षसश्चित्रोतयो वामजाताः ३

३ १ २ ३ १ २३ १ २र
१८१९ इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
स दर्शतस्य वपुषो वि राजसि पृणक्षि दर्शतं क्रतुम् ४

३ १२ ३ ३ १ २ ३ १ २ ३ १ २ ३ २
१८२० इष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तँ राधसो महः
३ २ ३ १ २ ३ १ २ ३ २र ३ १ २ ३ २ ३ २
रातिं वामस्य सुभगां महीमिषं दधासि सानसिँ रयिम् ५

३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
१८२१ ऋतावानं महिषं विश्वदर्शतमग्निँ सुम्नाय दधिरे पुरो जनाः
१ २ ३ १ २ ३२उ ३ १ २ ३ २
श्रुत्कर्णँ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ६ १(दि)

इति पञ्चमः खण्डः ५

१ २र ३ २ ३ १ २ ३ १ २ ३ १ २
१८२२ प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः
२ ३ २ ३ १ २र
यस्य त्वँ सख्यमाविथ १

१ २ ३ १ २र ३ २ ३ २ ३ १ २ ३ १ २
१८२३ तव द्रप्सो नीलवान्वाश ऋत्विय इन्धानः सिष्णवा ददे
२ ३ १ २ ३ १ २ ३ २ ३ १ २र
त्वं महीनामुषसामसि प्रियः क्षपो वस्तुषु राजसि २ २(यी)

१ २र ३ १ २ ३ २ ३ १ २र ३ १ २ ३ १ २
१८२४ तमोषधीर्दधिरे गर्भमृत्वियं तमापो अग्निं जनयन्त मातरः
१ २र ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
तमित्समानं वनिनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा १ ३(रि)

३ १ २र ३ २ ३ १ २र
१८२५ अग्निरिन्द्राय पवते दिवि शुक्रो वि राजति
१ २ ३ १ २
महिषीव वि जायते १ ४(या)

२ ३ २३ १ २र ३ २ ३ २३ २ ३ १ २
१८२६ यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति
२ ३ २३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
यो जागार तमयँ सोम आह तवाहमस्मि सख्ये न्योकाः १ ५(या)

३ १ २ ३ १ २र ३ १ २ ३ २ ३ १ २
१८२७ अग्निर्जागार तमृचः कामयन्तेऽग्निर्जागार तमु सामानि यन्ति

३ १ २ ३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
अग्निर्जागार तमयँ सोम आह तवाहमस्मि सख्ये न्योकाः १ ६(वा)

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१८२८ नमः सखिभ्यः पूर्वसद्भ्यो नमः साकन्निषेभ्यः
३ १ २र ३ १ २
युञ्जे वाचँ शतपदीम् १

३ १ २र ३ १ २ ३ १ २ ३ १ २
१८२९ युञ्जे वाचँ शतपदीं गाये सहस्रवर्तनि
३ १ २र ३ १ २
गायत्रं त्रैष्टुभं जगत् २

३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
१८३० गायत्रं त्रैष्टुभं जगद्विश्वा रूपाणि सम्भृता
३ १ २र ३ २
देवा ओकाँसि चक्रिरे ३ ७(यु)

३ २उ ३ १ २३ २उ ३ २ ३ २ ३ १ २
१८३१ अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः
२ ३ २ ३ २ ३ १ २
सूर्यो ज्योतिर्ज्योतिः सूर्यः १

१ २ ३ १ २र ३ १ २ ३ १ २
१८३२ पुनरूर्जा नि वर्तस्व पुनरग्न इषायुषा
१ २ ३ १ २
पुनर्नः पाह्यँहसः २

३ २ ३ १ २र ३ २ ३ १ २ ३ १२
१८३३ सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया
३ १ २ ३ २ ३ १ २
विश्वप्स्न्या विश्वतस्परि ३ ८(ठा)

इति षष्ठः खण्डः ६

१ २ ३२उ ३ २र ३ २ ३ २ ३ २
१८३४ यदिन्द्राहं यथा त्वमीशीय वस्व एक इत्
३ २ ३ १ २
स्तोता मे गोसखा स्यात् १

१ २ ३ १ २ ३ १ २ ३ १ २
१८३५ शिक्षेयमस्मै दित्सेयँ शचीपते मनीषिणे

२ ३ १ २र ३ २
यदहं गोपतिः स्याम् २

३ १ २ ३ २ ३ १ २ ३ २
१८३६ धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते
१ २र ३ १ २
गामश्वं पिप्युषी दुहे ३ ९(पि)

२ ३ १ २र ३ २ ३ १ २ ३ १ २
१८३७ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन
३ १ २र ३ १ २
महे रणाय चक्षसे १

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
१८३८ यो वः शिवतमो रसस्तस्य भाजयतेह नः
३ १ २ ३ १२
उशतीरिव मातरः २

२ ३ १२ ३ २ ३ १ २ ३ १ २
१८३९ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ
१ २ ३ १ २
आपो जनयथा च नः ३ १०(वा)

२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
१८४० वात आ वातु भेषजꣳ शम्भु मयोभु नो हृदे
२ ३ १ २
प्र न आयूꣳषि तारिषत् १

३ १ २ ३ १ २ ३२उ ३ २ ३ १ २
१८४१ उत वात पितासि न उत भ्रातोत नः सखा
१ २ ३ १ २
स नो जीवातवे कृधि २

२ ३ १ २ ३ २ऽ २ ३ १ २ ३ १ २
१८४१ यददो वात ते गृहे३ऽमृतं निहितं गुहा
१ २ ३ १ २
तस्य नो धेहि जीवसे ३ ११(पौ)

३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
१८४३ अभि वाजी विश्वरूपो जनित्रꣳ हिरण्ययं बिभ्रदत्कꣳ सुपर्णः
१ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २र ३ १ २
सूर्यस्य भानुमृतुथा वसानः परि स्वयं मेधमृज्रो जजान १

३ १ २र ३ १ २३ १ २ ३ २उ ३ १ २ ३ १ २
१८४४ अप्सु रेतः शिश्रिये विश्वरूपं तेजः पृथिव्यामधि यत्सम्बभूव
३ १ २ ३ १ २ ३ २३ १ २३ १ २ ३ २ ३ १ २ ३ १ २
अन्तरिक्षे स्वं महिमानं मिमानः कनिक्रन्ति वृष्णो अश्वस्य रेतः २

३ २ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ २ ३ १ २
१८४५ अयँ सहस्रा परि युक्ता वसानः सूर्यस्य भानुं यज्ञो दाधार
३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २र ३ १ २
सहस्रदाः शतदा भूरिदावा धर्ता दिवो भुवनस्य विश्पतिः ३ १२(पु)

१ २ ३२उ ३ १ २र ३ १ २र ३ १ २
१८४६ नाके सुपर्णमुप यत्पतन्तँ हृदा वेनन्तो अभ्यचक्षत त्वा
१२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २३ २
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् १

३ १ २ ३ २उ ३ १ २ ३ २ ३ १ २र ३ १ २
१८४७ ऊर्ध्वो गन्धर्वो अधि नाके अस्थात्प्रत्यङ्चित्रा बिभ्रदस्यायुधानि
१ २ ३ १ २ ३ २ ३ २ १ २र ३ १ २
वसानो अत्कँ सुरभिं दृशे कँ स्वा३र्ण नाम जनत प्रियाणि २

३ १ २ ३ २ ३ १ २र ३ २ ३ १ २ ३ १ २ ३ १ २
१८४८ द्रप्सः समुद्रमभि यज्जिगाति पश्यन्गृध्रस्य चक्षसा विधर्मन्
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ३ १३(खु)

इति सप्तमः खण्डः ७

इति नवमप्रपाठकस्य द्वितीयोऽर्धः ९-२ इति विंशोऽध्यायः २०

## अथैकविंशोऽध्यायः

## अथ नवमप्रपाठके तृतीयोऽर्धः ९-३

(१-९) १-४, ५ (१-२) अप्रतिरथ ऐन्द्रः ५ (३), ६ (३), ८ (१, ३) पायुर्भारद्वाजः ७ (१-२) ज्ञासो भारद्वाजः ९ (१) जय ऐन्द्रः ९ (२-३) गोतमो राहूगणः ४(३), ६(१-२), ७(३), ८(२) ॥ १, २ (२-३), ३-४, ५ (२), ६, ७, ९ (१) इन्द्रः ५ (२) इन्द्रो मरुतो वा २ (१) बृहस्पतिः ५ (१) अप्वा देवी ५ (३)

इषवः

६ (३) युद्धभूमिकवचब्राह्मणस्पत्यादितयः ८ (१, ३ संग्रामाशिषः
१ वर्म सोमवरुणाः ३ देवब्रह्माणि) ९ सोमावरुणौ ॥
(२-३) विश्वे देवाः ८ (३) ॥ ३ ॥ १-४ ५ ६ ८ ९ (१-२) त्रिष्टुप् ५ (२-
३), ६ (२), ७ (१-२), ८ (२) अनुष्टुप् ६ (३) पंक्तिः
९ (३) विराट्स्थानाः ७ (३) विराड् जगती ८ (२) ॥

१८४९ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्
सङ्क्रन्दनोऽनिमिष एकवीरः शतँ सेना अजयत्साकमिन्द्रः १

१८५० सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना
तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा २

१८५१ स इषुहस्तैः स निषङ्गिभिर्वशी सँस्रष्टा स युध इन्द्रो गणेन
सँ सृष्टजित्सोमपा बाहुशर्ध्यू३ग्रधन्वा प्रतिहिताभिरस्ता ३ १(फे)

१८५२ बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः
प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् १

१८५३ बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः
अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् २

१८५४ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा
इमँ सजाता अनु वीरयध्वमिन्द्रँ सखायो अनु सँ रभध्वम् ३ २(हे)

१८५५ अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः
दुश्च्यवनः पृतनाषाडयुध्यो३ऽस्माकँ सेना अवतु प्र युत्सु १

१ २ ३ २उ ३ २ ३१ २ ३ २ ३१ २३ १ २
१८५६ इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः
३ १ २ ३ १ २र ३ १ २ ३ १ २
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् २

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
१८५७ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताँ शर्ध उग्रम्
३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ३ ३(च)

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २
१८५८ उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनाँसि
१ २ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः १

३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २र ३ १ २
१८५९ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु
३ १ २ ३ १ २र ३ १ २ ३ १ २
अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अवता हवेषु २

३ १ २र ३ १२ ३ १ २ ३ १ २ ३ १ २
१९६० असौ या सेना मरुतः परेषामभ्येति न ओजसा स्पर्धमाना
१ २ ३ २३ १ २ ३ २३१ २३ २ ३ २उ ३ २
तां गूहत तमसापव्रतेन यथैतेषामन्यो अन्यं न जानात् ३ ४(चु)

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १२
१८६१ अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि
३ २उ ३ १ २ ३ १ २र३ २ ३ २ ३ १ २
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् १

२ ३ १ २ ३ १ २ ३ १ २
१८६२ प्रेता जयता नर इन्द्रो वः शर्म यच्छतु
३ १ २ ३ १ २ ३ १ २र
उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ २

१ २ ३ १ २ ३ १२ ३ १ २
१८६३ अवसृष्टा परा पत शरव्ये ब्रह्मसँशिते
२ ३ २ ३ १ २ ३ २उ ३ २ ३ १ २
गच्छामित्रान्प्र पद्यस्व मामीषां कं च नोच्छिषः ३ ५(ठा)

३ १ २३ १ २र ३ १ २ ३१२३ १२ ३ १ २
१८६४ कङ्काः सुपर्णा अनु यन्त्वेनान्गृध्राणामन्नमसावस्तु सेना
१ २ ३२३ २ ३ १ २ ३ १ २ ३ १ २
मैषां मोच्यघहारश्च नेन्द्र वयाँ स्येनाननुसंयन्तु सर्वान् १

३ १ २ ३ १ २ ३ २३ २
१८६५ अमित्रसेनां मघवन्नस्माञ्छत्रुयतीमभि
३ १ २र ३ १ २ ३ १ २
उभौ तामिन्द्र वृत्रहन्नग्निश्च दहतं प्रति २

१२ ३ २ ३ १२ ३ १ २ ३ १ २
१८६६ यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव
१२ ३ १ २३ २ ३१ २ ३ १ २ ३ २ ३ १ २
तत्र नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ३ ६(या)

२र ३ १ २र ३ २ ३२ ३ १२
१८६७ वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज
२ ३ १ २ ३ १२ ३ १ २
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः १

१ २ ३ १ २ ३ १ २ ३ २
१८६८ वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः
२ ३ १ २ ३ २ ३ १ २ ३ १ २
यो अस्माँ अभिदासत्यधरं गमया तमः २

१ २ ३१ २र ३ १ २ ३ १ २ ३ १ २ ३ २
१८६९ इन्द्रस्य बाहू स्थविरौ युवानावनाधृष्यौ सुप्रतीकावसह्यौ
१ २ ३ २उ ३ १ २३ १ २ ३१ २र ३ १ २ ३ २
तौ युञ्जीत प्रथमौ योग आगते याभ्यां जितमसुराणाँ सहो महत्
३ ७(थि)

१ २ ३ १ ३ ३ १ २ ३ २ ३ २३ १ २
१८७० मर्माणि ते वर्मणा च्छादयामि सोमस्त्वा राजामृतेनानु वस्ताम्
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु १

३ १ २ ३ १ २
१८७१ अन्धा अमित्रा भवताशीर्षाणोऽहय इव
१ २ ३ १ २ ३ १ २ ३ १२
तेषां वो अग्निनुन्नानामिन्द्रो हन्तु वरंवरम् २

२ ३   १ २ ३ २३ २ ३ १ २
१८७२ यो नः स्वोऽरणो यश्च निष्ट्यो जिघाँसति
३ १   २र   ३ २ ३ २ ३ १   २र३   २ ३ २ ३ १   २र
देवास्तँ सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरँ शर्म वर्म ममान्तरम् ३ ८(वी)

३ २उ   ३ १   २ ३ १   २ ३ १   २ ३ २ ३   १ २   ३ १२
१८७३ मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः
३ २   ३   १ २ ३ १ २   ३ १   २र   ३   २र
सृकँ सँशाय पविमिन्द्र तिग्मं वि शत्रूं ताढि मृधो नुदस्व १

३ १   २र   ३ १ २   ३ १ २
१८७४ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः
३१ २र   ३ १   २ ३ २ ३क २र   ३ १ २ ३ १   २र
स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिर्व्यशेमहि देवहितं यदायुः २

३   २ ३ १ २ ३ १ २   ३   १ २   ३ २   ३ १ २
१८७५ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
३   २ ३   २   ३ १ २   ३   २   ३ २ ३ १ २
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु
३   २   ३ २ ३ १ २
ॐ स्वस्ति नो बृहस्पतिर्दधातु ३ ९(कू)

इति नवमप्रपाठकस्य तृतीयोऽर्धः नवमप्रपाठकश्च समाप्तः ९-३

इत्येकविंशोऽध्यायः २१

इत्युत्तरार्चिकः समाप्तः

इति सामवेदसंहिता समाप्ता

Source: *Sāma Veda-Saṃhitā,*
Svādhyaya Mandala Edition, Pāradī

Typescript: Prepared by Jost Gippert

Conversion to Devanagari using
Vedapad Software by Ralph Bunker

Additional data entry and proofing by Peter Freund

Formatted for
Maharishi University of Management Vedic Literature Collection